श्रीगणेशायनमः श्रीशंवंदे श्रीसीतारामचंद्राभ्यांनमः हृदयेयस्प्रेरणयासमुद्यतोहंविमूढतरबुद्धिः तत्पदकमलंवंदेगोकुलनाथ
स्यवेदादेः १ हनुमन्नाटकसागरशब्दार्थागाधतांस्फुटगाधलम् नेतुंकृतसाहसतांममस्फुधियःक्षंतुमर्हंतु २ तावच्छ्रीरामचंद्रगुणचक्रवा
लवर्णनेच्छुःकविःस्वाभीष्टदेवतानामांतरिताशीः पूर्वांनांदीमवतारयति कल्याणानामित्यादिद्वादशपदैः तदुक्तंनाटकावतारे अष्टाभिर्द
शभिर्वापिनांदीद्वादशभिःपदैः आशीर्नमस्क्रियावस्तुनिर्देशोवापितन्मुखमि ति नांदीमंगलवचनम् अत्रसंक्षेपतोर्थोद्घाटने-
क्रियते विस्तरस्यश्रद्धाविक्षेपकत्वात् रामनामभवतांभूतयेप्रभवतुइत्यन्वयः भूतयेऐहिकपारलौकिकैश्वर्यायमोक्षायवा भूतिरै-
श्वर्यमोक्षयोरितिचरकः मेलकोपमालंकारःउक्तंवीरभानौ विशेषणार्थनिर्भर्त्तायद्यनेकार्थभाक्पदः वाक्यवादविहीनोपिमेलकःसंमतो

कल्याणानांनिधानंकलिमलमथनंपावनंपावनानांपाथेयंयन्मुमुक्षोःसपदिपरपदप्राप्तयेप्रस्थितस्य
विश्रामस्थानमेकंकविवरवचसांजीवनंसज्जनानांबीजंधर्मद्रुमस्यप्रभवतुभवतांभूतयेरामनाम १

बुधैरिति तत्रविशेषणैस्तद्रूपप्रदत्वंद्योतयति कल्याणानिनिधीयंतेऽस्मिन् तत् निधानं कलिमलमथनंएतेनपापहारित्वमुक्तं कविवर
वचसांवाल्मीक्यादिवाचांएकंविश्रामस्थानं एतेनतदितरस्यासद्वर्णनत्वमुक्तं एतेनपदत्रयेणैहिकैश्वर्यप्रदत्वमुक्तं पारलौकिकैश्व
र्यप्रदत्वमाह पावनानांब्रह्मादीनामपिपावनम् एतेनतत्तल्लोकप्रदत्वमुक्तं अतःपारलौकिकैश्वर्यप्रदत्वमायाति अथमोक्षप्रदत्वमाह
परपदप्राप्तये परस्मिन्ब्रह्मणिपदंस्थानंतत्प्राप्तयेप्रस्थितस्यमुमुक्षोःपाथेयंमार्गेसंचारसाधनं ननुनाम्नैवमोक्षःकथंधर्मादीनांसत्वशोधन
त्वेनमोक्षप्रदत्वमितिचेत्तत्राह धर्मद्रुमस्यबीजंनाम्निकीर्तितेसर्वेधर्माःकृताभवंति अथोसत्तिर्बीजेपुष्पफलादिकंसर्वमस्तीति जीवनानांइतिवापा
ठःजीवनंप्रकृतिस्तस्यापिजीवनंचेतनकर्तृ उक्तंच यतोजीवत्वमायातिजीवःप्रकृतितःस्वतइति एतैर्विशेषणैर्मोक्षप्रदत्वमुक्तं १ ५

इदानींवर्णनीयनायकगुणानाह पातिति सदेवोविलसनशीलः श्रीरामोवः पातु कीदृक् श्रियस्तनयोर्यः पत्रभंगः पत्ररचनातत्रयामकरीमुद्रात
यांकितोरस्थलः एतेनशृंगारित्वंसूचितं सर्वजगत्पतिरनेनरंजितलोकत्वमुक्तं पुनः कीदृक् मधुवधूवक्त्राण्येवाब्जानिकमलानितत्संकोचना
यचंद्रोदयः सकः यस्यनवेंदुविशदेद्वितीयाचंद्राकारेदंष्ट्रांकुरेभूर्भातिस्मक्रीडायैधृतावराहतनुर्येनकिंभूताभूः प्रलयाब्धिरेव पल्वलमल्प
सरस्तस्यतलंतत उत्खातोयः एकमुस्तस्तंबस्तदाकारा एतेनपदद्वयेनातिकल्पत्वमुक्तं उक्तंचरसोदधौ दातासद्गुणशीलः स्ववपोरूपान्वि
तःपरप्रेमी विद्यावानतिकल्पोरंजितलोकोमतोनेतेति २ अथविद्यावानितितिनेतृगुणंवक्तुंपद्यमवतारयति यमिति यंरामंशिवभक्ताःशिवं

पातुश्रीस्तनपत्रभंगमकरीमुद्रांकितोरस्थलोदेवः सर्वजगत्पतिर्मधुवधूवक्त्राब्जचंद्रोदयः क्रीडाक्रोड
तनोर्नवेंदुविशदेदंष्ट्रांकुरेयस्यभूर्भातिस्मप्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृतिः २ यंशैवाःसमु
पासतेशिवइतिब्रह्मेतिवेदांतिनोबौद्धाबुद्धइतिप्रमाणपटवः कर्तेतिनैयायिकाः अर्हन्नित्यथजैन-
शासनरताः कर्मेतिमीमांसकाः सोयंवोविदधातुवांछितफलंत्रैलोक्यनाथोहरिः ३

तिनाम्नासमुपासते महारुद्रा
दभूत्प्रकृतिरतः सूत्रंतनोहमितिततोविश्वमितिश्रुतेः वेदांतिनोब्रह्मेति एकमेवाद्वितीयंब्रह्मनेहनानास्तिकिंचनेतिश्रुतेः बौद्धाबुद्धइतिप्रमाण्या
लंभनंसंसृतिं नंदयर्येतिमामितिश्रुतेः प्रत्यक्षानुमानोपमानशब्दाभावार्थप्रतिपत्तिप्रमाणानीतिप्रमाणेष्वेवनिपुणानैयायिकाः कर्तेति
सनातनाःपशवः प्रविशंतिप्रमेयानुभूतेः कर्तैवततइतिश्रुतेः जैनाज्ञाभिरताअर्हन्नितिस्वभावएवेश्वरोनान्योस्तिकदाप्यस्यानीदृशत्वाप
त्तेरितिश्रुतेः मीमांसकाः कर्मेति कर्मणाजायतेनश्यतिभयाभयसुखानीतिश्रुतेः एतैस्तदुपदिष्टैर्मार्गैरेवयमुपासते सोयंरामोवांछि
तफलंपूरयतु एतेनविद्यावत्त्वमुक्तं हरिरित्यनेनदुःखहारित्वात्परप्रेमीगुणोदर्शितः त्रैलोक्यवासिजनैस्तत्तद्देवताभजनेनतत्तत्फलंप्रति
नाथ्यतेयाच्यतेइत्यनेनदातृत्वमुक्तम् २

४ इदानींकथायोजनायव्याख्याकृदात्मनःश्लोकचतुष्टयमवतारयति असीदित्यादि पंक्तिरथोदशरथोभूपःराजाआसीत्सकः यस्यभूरिश्र
वाःनारायणःस्वंआत्मानमेवरामभरतलक्ष्मणशत्रुघ्नरूपेणचतुर्धाविधायपुत्रतांआरप्राप किमर्थंउर्व्यांयेबर्बराराक्षसास्तेषांयोभूरिभार
स्तन्नाशायबर्बरोराक्षसाधमावितिधरणिः किंभूतः महितःपुत्रार्थमिष्टःअन्यत्सुगमम् ५ तेषांचतुर्णांपुत्राणांमध्येजनुषाजन्मनाईश्वरत्व-

तंरामंरावणारिंदशरथतनयंलक्ष्मणाग्र्यंगुणाढ्यंपूज्यंप्राज्यंप्रतापावलयितजलधिंसर्वसौभाग्यसिद्धिं-
विद्यानंदैककंदंकलिमलपटलध्वंसिनंसौम्यदेवंसर्वात्मानंनमामित्रिभुवनशरणंप्रस्पृहंनिष्कलंकम् ४
आसीदुद्भटभूपतिप्रतिभटप्रोन्माथिविक्रांतिकोभूपःपंक्तिरथोविभावसुकुलप्रख्यातकेतुर्बली उर्वीबर्ब
रभूरिभारहृतयेभूरिश्रवाःपुत्रतांयस्यारस्वमथोविधायमहितःपूर्णश्चतुर्धाविभुः५ तेषामीश्वरतागुणे-
श्चजनुषाज्यायानभूद्राघवोरामःसोप्यथकौशिकेनमुनिनारक्षोभयाद्याचितः राजानंसयशोधनोनरपतिः
प्रादात्सुतंदुःखितस्तस्मैसोपितमन्वगादनुगतःसौमित्रिणोच्चैर्मुदा ६ स्कंदस्त्रीदमनप्रमोदमुदितादास्था
यविद्योदयंरामःसत्यवतीसुतादुपगतस्तस्याश्रमंलीलया कृत्स्नंकौशिकनंदनेनचमखेतत्रागतान्राक्ष
सान्हत्वामूसुचदाशुभाविविदसौमारीचसुमाकृतिम् ७ पूर्णेयत्नविधौधियास्फुर भवद्रामेणसार्धंमुनिः
सीतासंवरणागताखिलनृपव्याभग्नवीर्यश्रियम् श्रुत्वात्कढ्नुरुत्सवंचमिथिलामास्थायतेनाधिकंसत्कारै
रुपलंभितःपुनरगाच्चापाश्रितंमंडलम् ८

प्रतिपादकगुणैश्चरामःज्यायानतिशयेनज्येष्ठोभूदितियोज्यम् अन्यत्सुगमम् ६ स्कं
दनाम्नोरक्षसःस्त्रीताटकासत्यवतीसुतात्विश्वामित्रा——हिद्योदयंआस्थायप्राप्यभाविवित्निमित्तभूतेनानेनमृगरूपेणरावणःसीतांहरिष्यतीति
भाविवित् शेषंसुगमं ७ तेनचापेनधनुषाआश्रितंमंडलंमंडलप्रदेशं

तत्ररामंहृद्यासीताविचिकित्सति कमठेति इदंधनुः कमठपृष्ठवत् कठोरंरघुनंदनोरामोमधुरमूर्तिः सुकुमारांगःअहहेतिखेदे अनेनरामेणइ
दंधनुः अधिज्यंअधिरूढगुणंकथंविधीयतांभवतः तातस्यपितुःपणः कोपिधनुरधिज्यंकरिष्यतितस्मैसीतांदास्यामीत्येवंरूपाप्रतिज्ञास्त्ववाय
मस्त्वेदारुणः अयोग्यः अस्तुत्यइति यद्वाभविसर्गपाठेहेतातनवपणोदारुणइतिमानसोक्तिः तातपणश्चेन्नाभविष्यत्तर्ह्यहंराममन्वि-
ष्यामीतिभावः स्रवः स्तोत्रंस्तुतिर्नुतिरित्यमरः ९ अथरामःसीतासंशयमवधार्यात्मशक्तिंज्ञापयितुंलक्ष्मणमनुवदति आद्वीपादिति भोल
क्ष्मण अमीनृपतयः आद्वीपात्समभ्यागताः द्विर्गताआपोयस्मिन्निति द्वीपं सागरांतर्वर्तीदेशः तमभिव्याप्य परतः लंकादेरपि यद्वाद्वीपोजंबु-
द्वीपस्तमभिव्याप्यपरतोद्वीपांतरादपि तत्रापिसर्वेनतु केचनतेषांमध्येकेनापिइदंमहद्धनुःमहतोरुद्रस्यधनुःयद्वामहत्त्वेदंधनुश्चनाकृष्टंन

सीताकमठपृष्ठकठोरमिदंधनुर्मधुरमूर्तिरसौरघुनंदनः कथमधिज्यमनेनविधीयतामहहतातपणस्त
वदारुणः ९ रामः आद्वीपात्परतोप्यमीनृपतयः सर्वेसमभ्यागताः कन्यायाःकलधौतकोमलरुचेःकीर्तेश्च
लाभःपरः नाकृष्टंनचटंकितंननमितंनोत्थापितंस्थानतः केनापीदमहोमहद्धनुरिदंनिर्वीरमुर्वीतलम् १०

न्वाकर्षणंतिष्ठतु नटंकितंटंकारवन्नकृतम् एतदपितिष्ठतुननमितमपिनमनमपिनजातंस्थानतोपिनोत्थापितम् अहोमहदाश्चर्यमि
दंउर्वीतलंनिर्वीरं वीरएवअत्रकोपिनास्ति यद्वा इदंधनुर्निर्वीरंनिर्गताःपराजिताः मानभंगात्पलायितावावीरायस्मात्तदितिवाक्यां
तरेनेदंशब्दस्यपुनरुक्तिः उर्वीतलमितिसप्तम्यर्थेप्रथमांतपदम् नन्वेतदाकर्षणादौकोलाभइतिचेत्तत्राह कलधौतस्यदाहो
त्तीर्णहेम्नइवकोमलारुचिर्यस्याएवंभूतायाः कन्यायाः लाभः अपरःकीर्तेश्चलाभः कलधौतंरौप्यहेम्नोरितिधरणिः कन्येयंकलधौ
तकोमलरुचिः कीर्तेश्चलाभोपर इति पाठे त्वयमेवार्थः इयंकन्यासीतातल्लाभः इतिसीतायाःपित्राद्यधीनतयाकन्यात्वं १० ५

२

लक्ष्मणइतिस्फगमंदेवेनिपूर्धार्धस्पष्टमेव तत्तस्मात्कारणात् मामादिश आज्ञापयभृत्यस्यममपत्कौतुकं आश्चर्यकर्तृबलं तत्पश्यपश्येत्या
दरेवीप्सा किंबलमितिचेत्तत्राह एतन्द्धनुःप्रोद्धर्तुंभूमेःप्रतिनामितुंनम्रीकर्तुंप्रचलितुंकोणगुणालोकनायचपलयितुंनेतुम् इतो-

गद्यं लक्ष्मणः रामहृदयानंदकंदांकुरोद्भवायनिजप्रचंडदोर्दंडयोर्महतींप्रौढींनाटयति देवश्रीरघु
नाथकिंबहुतयादासोस्मितेलक्ष्मणोमेवादीनपिभूधरान्नगणयेजीर्णःपिनाकःकियान् तन्मामादि-
शपश्यपश्यचबलंभृत्यस्ययत्कौतुकंप्रोद्धर्तुंप्रतिनामितुंप्रचलितुंनेतुंनिहंतुंक्षमः ॥ ७ ७

गमयितुंनिहंतुंभग्नीकर्तुंक्षमोस्मि किंपुनराकर्षणमात्रमितिभावः पिनाकोजगवंधनुरित्यमरः ममैवात्रेदृशीशक्तिः भवतस्तु
ब्रह्मांडोद्धरणासमहाइतिद्योतितम् ॥ ७ ७ ७ ७ ७ ७ ७ ७ ७

तयोरेवंवदतोरेतदंतरेजनकमासाद्यरावणपुरोहितोऽनुवदति दातव्येति भोजनकइयंसर्वोत्तमा दुहिताकस्मैचिद्याचतेपिवरायदातव्यै
व असौप्रसिद्धकुलाचारः एतेनकौलिन्यमुक्तम् लंकापतिरनेनैश्वर्यमुक्तम् दोःक्रीडामशकीकृतत्रिभुवनएतेनातिकल्पत्वमुक्तम् दोःक्री
डामशकीकृतत्रिभुवनःभुजक्रीडानिर्जितत्रिभुवनः यद्वाभुजक्रीडयामशकीकृतंनिश्चेतनीकृतंत्रिभुवनंयेन दंशाच्चेतनयोर्मशइतिविश्वः
मशएवमशकः एवंभूतोरावणः एनांस्वयमेवयाचतेमत्तस्मादज्ञातार्थवत्किमीक्षसेविचारयसि ननुवितर्केभगवाः प्राच्यामरीच्या
दयोमुनयः तद्वृत्तानिरावणचरितानिकथागोष्ठीषुनः अस्मान्शासतेकथयंति किंभूतानिपरोरजांसि शब्दानि यद्वारजोभ्योभूरेणु

रावणपुरोहितः दातव्येयमवश्यमेवदुहिताकस्मैचिदेनामसौदोःक्रीडामशकीकृतत्रिभुवनोलंका
पतिर्याचते तत्किंमूढवदीक्षसेननुकथागोष्ठीषुनःशासतेतद्वृत्तानिपरोरजांसिमुनयःप्राच्यामरीच्या
दयः१२ पुनःरामंप्रतिपुरोहितः समतादुत्तालैःस्फुरसहचरीचामरमरुत्तरंगैरुन्मीलद्भुजपरिघसौरभ्य
शालिना स्वयंपौलस्त्येनत्रिभुवनजिताचेतसिधृतात्वयिरेरामत्वंमाजनकपतिपुत्रीमुपयथाः १३

भ्यः पराणिअधिकानिपरोरजांसिपरस्शब्दंनिपातनंमन्यतेभोजराजः इत्यादिविशिष्टगुणोयंयाचते तस्मादस्मैदातव्यैवेतिभावः
ननुकथागोष्ठिषुतस्यासतीतिपाठेतुइतिवितर्केगोष्ठीषुपुरावृत्तवर्णनरूपास्तनस्यरावणस्यकथाईदृगयमितिरूपाकाचित्ताऽसतीमिथ्या
नसत्यैवेत्यर्थः यद्वातस्यलंकापतेर्वृत्तंशीलमिवशीलंयेषांतानिमध्यमपदलोपीसमासः रजसः प्रकृतेः परंपरोरजः परब्रह्मतद्रूपाणि
यद्वातस्यवृत्तानिशीलानि अध्याचरंनीतिशेषः ननुमहीयान्कथंयाचत इतिचेत्तत्राह साधारणोनिरातंकंकन्यामन्योपियाचते
किंपुनर्जगतांनेतासन्यौत्रःपरमेष्ठिनः १२ १३ ७ ७ ७ ७

४ इदानीं कथायोजनाय व्याख्याकृदात्मनः श्लोकचतुष्टयमवतारयति असीदित्यादि पंक्तिरथो दशरथो भूपः राजा आसीत् सं कः यस्य भूरिश्र
वाः नारायणः स्वं आत्मानमेव रामभरतलक्ष्मणशत्रुघ्नरूपेण चतुर्धा विधाय पुत्रतां आरप्राप किमर्थं उर्व्यां येवर्वरा राक्षसास्तेषां योभूरिभार
स्तन्नाशाय बर्बरा राक्षसाधमाविति धरणिः किंभूतः महितः पुत्रार्थमिष्टः अन्यत्सुगमम् ५ तेषां चतुर्णां पुत्राणां मध्ये जनुषा जन्मना ईश्वरत्व

तं रामं रावणारिं दशरथतनयं लक्ष्मणाग्र्यं गुणाढ्यं पूज्यं प्राज्यंप्रतापावलयितजलधिं सर्वसौभाग्यसिद्धिं-
विद्यानंदैककंदं कलिमलपटलध्वंसिनं सौम्यदेवं सर्वात्मानं नमामि त्रिभुवनशरणं प्रत्यहं निष्कलंकम् ४
आसीदुद्भटभूपतिप्रतिभटप्रोन्माथिविक्रांतिकोभूपः पंक्तिरथो विभावसुकुलप्रख्यातकेतुर्बली उर्वीबर्ब
रभूरिभारहृतये भूरिश्रवाः पुत्रतां यस्यारस्वयं थो विधाय महितः पूर्णश्चतुर्धा विभुः ५ तेषामीश्वरतागुणे-
श्च जनुषा ज्यायानभूद्राघवो रामः सोप्यथ कौशिकेन मुनिना रक्षोभयाद्याचितः राजानं सयशोधनो नरपतिः
प्रादात्सुतं दुःखितस्तस्मै सोपि तमन्वगादनुगतः सौमित्रिणोच्चैर्मुदा ६ स्कंदस्त्रीदमनप्रमोदमुदितादास्था
यविद्योदयं रामः सत्यवतीसुतादथ गतस्तस्याश्रमं लीलया क्रूरे कौशिकनंदने न च मखे तत्रागतानू राक्ष
सान्हत्वामूनुच दाशभाविविदसौ मारीचसुग्राकृतिम् ७ पूर्णे यज्ञविधौ धियास्फुरत्प्रभवद्रामेण सार्धं मुनिः
सीतासंवरणागताखिलनृपव्याभग्नवीर्यश्रियम् श्रुत्वा तद्धनुरुत्सवं च मिथिलामास्थाय तेनाधिकं सत्कारे
रुपलंभितः पुनरगाच्चापाश्रितं मंडलम् ८ प्रतिपादकगुणैश्च रामः ज्यायानतिशयेन ज्येष्ठोभूदिति योज्यम् अन्यत्सुगमम् ६ स्कं

दनाम्नो रक्षसः स्त्री ताटका सत्यवतीसुतात् विश्वामित्रा —— द्विद्योदयं आस्थाय प्राप्य भाविवित् निमित्तभूतेनानेन मृगरूपेण रावणः सीतां हरिष्यतीति
भाविवित् शेषं सुगमं ७ तेन चापेन धनुषा आश्रितं मंडलं मंडलप्रदेशं द

तत्ररामंदृष्ट्वासीताविचिकित्सति कमठेति इदंधनुः कमठपृष्ठवत् कठोरंरघुनंदनोरामोमधुरमूर्तिः सुकुमारांगश्चअहहेतिखेदे अनेनरामेणइ
दंधनुःअधिज्यंअधिकृतगुणंकथंविधीयतांअतः तातस्यपितुःपणःकोपिधनुरधिज्यंकरिष्यतिनस्मैसीतांदास्यामीत्येवंरूपाप्रतिज्ञास्त्ववाय
स्कृतैदारुणः अयोग्यः अस्तुत्यइति यद्वाअविसर्गपाठेहेतातनवपणोदारुणइतिमानसोक्तिः तातपणश्चेन्नाभविष्यत्तर्ह्यहंराममन्वि-
ष्यामीतिभावः स्तवःस्तोत्रंस्तुतिर्नुतिरित्यमरः ९ अथरामःसीतासंशयमवधार्यात्मशक्तिंज्ञापयितुंलक्ष्मणमनुवदति आद्वीपादिति भोल
क्ष्मणअमीनृपतयः आद्वीपात्समभ्यागताः द्विर्गताआपोऽस्मिन्निति द्वीपं सागरांतर्वर्तिदेशः तमभिव्याप्य परतः लंकादेरपि यद्वाद्वीपोजंबु-
द्वीपस्तमभिव्याप्यपरतोद्वीपांतरादपि तत्रापिसर्वैर्नतुकेवलतेषांमध्येकेनापिइदंमहद्धनुःमहतोरुद्रस्यधनुःयद्वामहच्चेदंधनुश्चनाकृष्टंन

सीताकमठपृष्ठकठोरमिदंधनुर्मधुरमूर्तिरसौरघुनंदनः कथमधिज्यमनेनविधीयतामहहतातपणस्त्व
वदारुणः ९ रामः आद्वीपात्परतोप्यमीनृपतयःसर्वेसमभ्यागताःकन्यायाःकलधौतकोमलरुचेःकीर्तेश्च
लाभःपरः नाकृष्टंनचटंकितंननामितंनोत्थापितंस्थानतःकेनापीदमहोमहद्धनुरिदंनिर्वीरमुर्वीतलम् १०

न्वाकर्षणंतिष्ठतु नटंकितंटंकारवन्नकृतम् एतदपितिष्ठतुननमितमपिनमनमपिनजातंस्थानतोपिनोत्थापितम् अहोमहदाश्चर्यमि
दंउर्वीतलंनिर्वीरं वीरएवअत्रकोपिनास्ति यद्वा इदंधनुर्निर्वीरंनिर्गताःपराजिताःमानभंगात्पलायितावावीरायस्मात्तदितिवाक्यां
तरेनेदंशब्दस्यपुनरुक्तिःउर्वीतलमितिसप्तम्यर्थेप्रथमांतपदम् नन्वेतदाकर्षणादौकोलाभइतिचेत्तत्राह कलधौतस्यदाहो
त्तीर्णहेम्नइवकोमलारुचिर्यस्याएवंभूतायाःकन्यायाःलाभःअपरःकीर्तेश्चलाभः कलधौतंरौप्यहेम्नोरितिधरणिः कन्येयंकलधौ
तकोमलरुचिःकीर्तेश्चलाभोपर इति पाठे प्ययमेवार्थः इयंकन्यासीतातल्लाभःइतिसीतायाःपित्राद्यधीनतयाकन्यात्वं १० ६

लक्ष्मण इति सगमं देवेनिपूर्वार्धस्पष्टमेव तत्तस्मात्कारणात् मामादिश आज्ञापय भृत्यस्य मम यत्कौतुकं आश्चर्यकर्तृ बलं तत्पश्य पश्येत्या
दरेवीप्सा किंबलमितिचेत्तत्राह एतद्धनुः प्रोद्धर्तुं भूमेः प्रतिनामितुं नम्रीकर्तुं प्रचलितुं कोणगुणालोकनायचपलयितुं नेतुम् इतो-

गद्यं लक्ष्मणः रामहृदयानंदकंदांकुरोद्भवाय निजप्रचंडदोर्दंडयोर्महतीं प्रौढीं नाटयति देवश्रीरघु
नाथ किंबहुतया दासोस्मितेलक्ष्मणो भेवादीनपि भूधरान्नगणये जीर्णः पिनाकः कियान् तन्मामादि-
शपश्य पश्य च बलं भृत्यस्य यत् कौतुकं प्रोद्धर्तुं प्रतिनामितुं प्रचलितुं नेतुं निहंतुं क्षमः ॥

गमयितुं निहंतुं भग्नीकर्तुं क्षमोस्मि किंपुनराकर्षणमात्रमिति भावः पिनाकोजगवं धनुरित्यमरः ममैवात्रेदृशी शक्तिः भवतस्तु
ब्रह्मांडोद्धरणमहाइतिद्योतितम् ॥

तयोरेवंवदतोरेतदंतरेजनकमासाद्यरावणपुरोहितोऽनुवदति दातव्येति भोजनकइयंसर्वोत्तमा दुहिताकस्मैचिद्याचतेपिवरायदातव्यै
व असौप्रसिद्धकुलाचारः एतेनकौलिन्यमुक्तम् लंकापतिरनेनैश्वर्यमुक्तम् दोःक्रीडामशकीकृतत्रिभुवनएतेनातिकल्पलमुक्तम् दोःक्री
डामशकीकृतत्रिभुवनःभुजक्रीडानिर्जितत्रिभुवनः यद्वाभुजक्रीडयामशकीकृतंनिश्चेतनीकृतंत्रिभुवनंयेन दंशाच्चेतनयोर्मशइतिविश्वः
मशएवमशकः एवंभूतोरावणः एनांस्वयमेवयाचतेयत्तस्माद्ज्ञातार्थवत्किमीक्षसेविचारयसि ननुवितर्केप्राग्भवाः प्राच्यामरीच्या
दयोमुनयः तद्वृत्तानिरावणचरितानिकथागोष्ठीषुनः अस्मान्शासतेकथयंति किंभूतानिपरोरजांसिशब्दानि यद्वारजोभ्योभूरेणु

रावणपुरोहितः दातव्येयमवश्यमेवदुहिताकस्मैचिदेनामसौदोःक्रीडामशकीकृतत्रिभुवनोलंका
पतिर्याचते तत्किंमूढवदीक्षसेनन्नुकथागोष्ठीषुनःशासतेतद्वृत्तानिपरोरजांसिमुनयःप्राच्यामरीच्या
दयः१२पुनःरामंप्रतिपुरोहितः समतादुत्तालैःस्फुरसहचरीचामरमरुत्तरंगैरुन्मीलद्भुजपरिघसौरभ्य
शून्यविना स्वयंपौलस्त्येनत्रिभुवनजिताचेतसिधृताद्यरेरामत्वंमाजनकपतिपुत्रीमुपयथाः१३

भ्यः पराणिअधिकानिपरोरजांसिपरस्शब्दंनिपातनंमन्यतेभोजराजः इत्यादिविशिष्टगुणोयंयाचते तस्मादस्मैदातव्येवेतिभावः
ननुकथागोष्ठिषुतस्यासतीतिपाठेनुइतिवितर्केगोष्ठीषुपुरावृत्तवर्णनरूपास्तनस्यरावणस्यकथाईदृगयामितिरूपाकाचित्ताऽसतीमिथ्या
नसत्यैवेत्यर्थः यद्वानस्यलंकापतेर्वृत्तंशीलमिवशीलंयेषांतानिमध्यमपदलोपीसमासः रजसः प्रकृतेः परंपरोरजः परब्रह्मतद्रूपाणि
यद्वातस्यवृत्तानिशीलानि अप्याचरंतीतिशेषः ननुमहीयान्कथंयाचत इतिचेत्तत्राह साधारणोनिरातंकंकन्यामन्योपियाचते
किंपुनर्जगतांनेतासन्पौत्रःपरमेष्ठिनः १२ १३ छ छ छ छ

माहेश्वरमितिस्रग्धरम् १४ धनुराकर्षणेरावणशक्तिंद्योतयति शंभोरिति काकुत्स्थादशकंधरः माहेश्वरंधनुः कृष्टुमाकृष्टुंयोग्योस्तिकिंभूतःशं
भोः आवासस्थानंअचलंउत्क्षेप्तुंउद्धर्तुंभुजकौतुकीभुजयोःकौतुकमस्यास्तीतिगुरोगृहमुद्धर्तुंकौतुकीकिंपुनस्तद्धनुरितिभावः १५ दशग्रीवोधनुरा
रोप्यलंकांनेष्यति अथवाकश्चिन्नृपः त्वांदूरदेशंनेष्यतीतिखेदइत्यर्थः तच्छ्रुत्वानदेवपद्यंपुनः पठतिकमठपृष्ठकठोरोयमिति १६ततः
पुरोहितःसक्रोधंहेतुर्मदद्दुर्वारावग्रहधनुषिदशकंधरस्यदोःपरीक्षाभुजबलज्ञानरूपाकानकापि ततवचेयंधनुरधिज्यकरणरूपापरीक्षा
कानकामीत्यर्थः किंविशिष्टस्यकैलासंगिरिंधृतवतःअन्यत्तुस्रग्धरा किंविशिष्टस्यतेहरेणनैपुण्येनसार्द्धंकैलासंनेतृगुणं उत्थवतः
उच्चैरूर्ध्वंधारयतः इदमेतादृगितिज्ञानवतः हरोनैपुण्यरुद्रयोरितिचरकः गुरौनेतृगुणेभावेकैलासोस्त्रीहरेपिचेतिशाश्वतः च

जनकः माहेश्वरंधनुःकुर्यादधिज्यंचेद्दारामिताम् पुरोहितःगुरोःशंभोर्धनुर्नोचेच्चूर्णतांनयतिक्षणात् १४जनकोविहस्य शंभोरावासमचलमुत्क्षेप्तुभुजकौतुकी माहेश्वरं धनुःकृष्टमर्हतिदशकंधरः १५ जनकःसखेदमाह माहेश्वरोदशग्रीवःक्षुद्राश्चान्येमहीभुजः पिनाकारोपणंशल्कंहासीतेकिंभविष्यति १६ सार्द्धंहरेणहरवल्लभयाचदेव्याहेरंबषण्मुखवृषप्रमथावकीर्णम् कैलासमुद्धृतवतोदशकंधरस्यकेयंचतेधनुषिदोर्मददोःपरीक्षा १७ पुनः लभयादेव्यासार्द्धंदेवीद्योत्तमाना लभाकार्याकार्यपरीक्षातयासहेत्यर्थःकार्याकार्यविचारेक्षालभाल
ज्याजयध्वनिरितिविश्वः किंविशिष्टंनेतृगुणंहेरंबषण्मुखवृषाणांयाःप्रमथाःविद्यास्ताभिराकीर्णंयुक्तं हेरंबोगणेशस्तस्यैवाग्रपूज्यत्वंवि
द्याषण्मुखस्यवशत्रुसंहारविद्यावृषोधर्मस्यैवलोकपालनविद्याएताभिर्युक्तंएतद्विशेषणत्रयेणसद्गुणशालित्वानिकल्पत्वरंजितलोक
त्वगुणादर्शिताःहरेणहरवल्लभयाचेतिपदद्वयेनविद्यात्रत्वमुक्तं किंवत्हरोरुद्रस्तद्वत्यथारुद्रःसर्वंजानातितथाखिलनेतृगुणान्जान
तःतवधनुरुद्धरणमात्रेकापरीक्षेतिभावः १७

जनकोपिपुरोहितमाक्षिप्यस्वप्रतिज्ञातंराज्ञः श्रावयति जानकीजनानांसमूहोजानंजानक मस्यास्तीतिजानकीजनसमृद्धिमान् अनेनतस्यनि
र्भयत्वंसूचितं अन्यथासीतावृत्तवर्णनेनैवरस्यमायाति अतोजानकीपदेनजन क एवं भोक्षत्रियाः शृणुतकिंविशिष्टाजनककल्पाजनकोरु
द्रःबलेनततःकिंचिन्न्यूनाइत्यर्थः लोकरुद्रनृपव्याजतातेषुजनकःपुमानितिधरणिः शल्कमितिपाठेजनकस्यममशल्कंपणंश्रृणुतत
माह यत्रधनुषिदशवदनभुजानांशक्तिःकुंठिताजातातदैशंधनुः कोपिनमयति तदारोपणेनैवमैथिलीतस्यतदारोपणकर्तुःदाराःस्यात्
दाराशब्दोभूम्न्येवकिंविशिष्टात्रिभुवनजयलक्ष्मीः यस्मात्सौत्रिभुवनंजितंभवतीतिभावः धनुरारोपणेनतद्वासिजनावमानात् १८ इत्युक्ते
श्रीरामः सर्वतोवलोक्यतदुत्थानंनाटयति अत्ररामेचित्ररसः प्रतिपाद्यतेधनुःस्थानेतिपङ्क्तिमुखमुपविष्टायाः जानक्याः कपोलेस्मर-

जानकी श्रृणुतजनककल्पाःक्षत्रियाःस र्व एतेदशवदनभुजानांकुंठितायत्रशक्तिः नमयतिधनुरैशंयस्त
दारोपणेनत्रिभुवनजयलक्ष्मीर्मैथिलीतस्यदाराः १८ श्रीरामः कपोलेजानक्याःकरिकलभदंतद्युतिमु
षिस्मरस्मेरंगंडोड्डमरपुलकंवक्त्रकमलं मुहुःपश्यन्श्रृण्वन्रजनिचरसेनाकलकलंजटाजूटग्रंथिंरच
यतिरघूणांपरिवृढः १९

स्मेरंसकामस्मितंयथास्यात्तथावक्त्रकमलंनिजमुखा
रविंदप्रतिबिंबंपश्यन् एतेनमधुररसोदर्शितः किंविशिष्टेकपोलेकरिकलभोहस्तिशावकस्तस्यदंतयोर्द्युतिंकिंचित्पीतोज्वलतांमुष्णाती
तिएतेनसीतायाअपिचरमकैशोर मुक्तम् स्वयंवरागतरक्षःसेनाकोलाहलंचश्रृण्वन् वयंबलाद्धरिष्यामः इत्येवंरूपं एतेनभयानको
दर्शितः जटाजूटस्यमुहुर्ग्रंथिंरचयति अनेनवीररसोदर्शितः ब्रतिनस्तस्यजटाजटेत्यमरः गंडोड्डमरपुलकंगंडआपकं एतेनोद्धास्वरारव्यः
स्निग्धसात्विकोदर्शितः रसत्रयेपिऊड्डमरःप्रचंडःपरिवृढोधिपः उक्तंचमदीयरसोदधौशबलत्वंहिरसानांसर्वेषामेवजायतेयत्र दृशमःसो
त्रनिरुक्तश्चित्ररसःसर्वरससारः १९

धनुरुद्धरणाडंबरे सीताजामदग्न्ययोः शुभाशुभसंद्योतयतिगृहीनेति पस्पंद अस्फुरत् तदुक्तं वसंतराजे चक्षुर्वामं मृगदृशो जयकाशिभृशं लग्नु तदेव पुरुषस्याराान्नस्फुरितं भयशंसनमिति २० इदंद्धितयं पृथ्वीं भुजंगमं चेति तन्निश्चितयेतस्मिन् त्रितये भूभुजंगमकूर्मरूपे दधीषां धर्तुमिच्छां कुरुतेति २१ अत्र भूतार्थे यातीत्यादि वर्तमाननिर्देशः कवेस्तात्कालिकानुभवेन फटा यां तु फणाद्वयोरित्यमरः बृंहितं करिगर्जितमित्यमरः पुरजितस्त्रिपुरजेतुः रुद्रस्य २२ अथ धनुर्भंगेनानारसानुभवाच्चित्ररसं दर्शयितुं पद्यमवतारयति उत्क्षिप्तमिति कौशिके वत्सलरसो

गृहीतहरकोदंडे रामे परिणयोन्मुखे पस्पंदनयनं वामं जानकीजामदग्न्ययोः २० लक्ष्मणः रामे सज्जं धनुः कुर्वति सति पृथ्व्यादीनि भुवनान्यधो यास्यंतीत्याशंक्याह पृथ्विस्थिराभव भुजंगमधारयैनां त्वं कूर्मराज तदिदं द्वितयं दधीथाः दिक्कुंजराः कुरुत तत्त्रितये दधीषां रामः करोति हरकार्मुकमाततज्यं २१ लक्ष्मणः रामं पृथ्वी याति विनम्रतां फणिपतेर्नम्रं फणामंडलं बिभ्रत्क्षुभ्यति कूर्मराजसहितो दिक्कुंजराः कातराः आतन्वंति च बृंहितं दिशि भटैः सार्द्धं धराधारिणो वेपंते रघुपुंगवे पुरजितः सज्जं धनुः कुर्वति २२ उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्द्धं मुखैर्नामितं भूपानां जनकस्य संशयधिया सार्कं समास्फालितम् वैदेहीमनसा समं च सहसाकृष्टं ततो भार्गवप्रौढाहंकृतिद्रुमदनेन सहितं तद्भग्नमैशं धनुः २३ ज्ञानः अत्र हर्षः संचारी हर्षात्पुलकाः सात्विका इति ज्ञानम् भूपेषु भयानकरसः अत्र दैन्यं संचारी दैन्यादेव सुखनमनं अत्र भीषणात्रिविधानत्र प्रभावेनैव रामे भीषणत्वं जनके करुणारसो जातः अत्र ग्लानिः संचारी सा च धैर्जाता आध्यनुभावः संशय इति ज्ञानं वैदेह्यां मधुररसो जातः मन आकर्षणमेवात्रानुभावः रामे वीररसः अत्र स्पर्द्धोद्दीपनं सा परशुरामागत इति ज्ञानं अत्र सर्वरसानामुद्दीपनविभावो राम एव २३

ह॰ना
५

अं॰
१

धनुषोमहत्त्ववर्णनेनरामेमहत्त्वमवतारयति शंभौरुद्रेयद्गुणवल्लरींप्रत्यंचिकामाकृष्यकर्णांतिकमुपनयतिसतितदात्रिपुरावरोधस्फुट
शांकर्णोत्पलग्रंथयःभ्रश्यंति यदाचइमांगुणवल्लरींउन्मुच्यपरित्यज्यस्वंआत्मीयंप्रकोष्ठकंआस्फालयतितदातासामेवत्रिपुरस्फुटशांवलयानि
कंकणानिभिद्यंते तदीदृग्धनुर्दाशरथिनाभग्नमितिमहत्त्वम् २४ नन्वत्रतदुत्थापनमात्रमेवपणः किमर्थंतद्रामेणभग्नमितिचेत्तत्राह तत्
ऐशंधनुः रामहस्ततीर्थेदेहंमुमोच स्वकृतवत् किमर्थंनिजपुरस्मरणायपापनाशार्थंकथंपापसंभावना ब्रह्माचमाताचब्रह्ममानरौतयोर्वधः
तेनपातकिनौयोमन्मथारिः क्षत्रांतकारिणौतयोः करसंगमाद्यसंसर्गपापंतद्भीत्या अन्योपिपापः तीर्थेदेहंत्यक्त्वाशुद्धोभवतीतिभ्र

शंभौयद्गुणवल्लरीमुपनयत्याकृष्यकर्णांतिकंभ्रश्यंतित्रिपुरावरोधस्फुटशांकर्णोत्पलग्रंथयः स्वंचा
स्फालयतिप्रकोष्ठकमिमामुन्मुच्यतासाम्महोभिद्यंतेवलयानिदाशरथिनातद्भग्नमैशंधनुः २४ तद्ब्र
ह्ममातृवधपातकिमन्मथारिक्षत्रांतकारिकरसंगमपापभीत्या ऐशंधनुर्निजपुरस्मरणायनूनंदेहंमु
मोचरघुनंदनपाणितीर्थे २५ त्रुट्यद्भीमधनुःकठोरनिनदस्तत्राकरोद्विस्मयंत्रस्यद्वाजिरवेरमार्ग
गमनंशंभोःशिरःकंपनम् दिग्दंतिस्खलनंकुलाद्रिचलनंसप्तार्णवोन्मीलनंवैदेहीमदनंमदांधदमनं
त्रैलोक्यसंमोहनम् २६

सिद्धम् २५ तत्रतस्मिन्नवसरेत्रुट्यद्भज्यमानंभीमोरुद्रः तद्धनुस्तस्यकठोरः परुषोनिनादः सवि
स्मयंआश्चर्यमकरोत् तदेवद्योतयति त्रस्यंतोवाजिनोयस्यासौत्रस्यद्वाजीसचासौरविश्चतस्यशब्दश्रवणमात्रेणत्रस्ताश्वस्यरवेरमार्ग
गमनंअकरोदितिसर्वत्रानुवर्त्यते सप्तार्णवानांउच्चैराकाशेमेलनंऐक्यतांनतुभूमौतथासतिप्रलयःस्यात् एतत्सर्वेणाद्भुतरसोदर्शितः
उक्तंचमदीयरसोदधौ यामोचितैर्विभावैःपुष्टियातारतिर्हिविस्मयजा रसोद्भुताख्यःसःस्यात्पूर्णोपिस्याद्विभावोत्र २६ ७

५

तमेवाद्भुतरसं विशिनष्टि रुंधन्निति आर्यो रामस्तस्य भुजबलेन दलद्भज्यमानो यः कोदंडः धनुस्तस्य कोलाहलः शब्दाडंबरः अयं उन्मी
लति प्रकटी भवति किं कुर्वन् विधेः ब्रह्मणः अष्टश्रुतीः कर्णान् निरुंधन् व्यावृण्वन् अष्टौ दिशः मुखरयन् प्रतिध्वनिना वाचालिताः कुर्वन् महे
श्वरस्याष्टमूर्तीः क्रोडयन् व्याकुलयन् तथाचागमे भूर्जलं वह्निराकाशं वायुर्यज्वा शशी रविः इत्यष्टौ मूर्तयः शंभोर्मंगलं जनयंतु नः इ
ति अष्टौ कुलक्ष्माभृतः कुलगिरीन् विस्फोटयन् तानाहागमः विजयः कुमुदो नीलो निषधो हिमवानथ जयंतः कालनिषधो वाहीको ऽष्टौ दिग्
द्रयः एते भूजनविभाने पन्नगकुलान्यपि तत्रैव नागसर्पोरगाखुभुग्दंदशूकविजल्पगाः मायिकामृतबालेयशेषाख्याश्चाष्टजातयः
सर्पेति मोदिनः उरगादिषु सर्वेष्वपि अष्टस्क भेदेषु यथा पंकजं स्थलजेष्वपि भिंदन् भूतलमिति पद्यमत्र केचित्पठंति तत्साक्षिप्तमस्ति रुंद्धन्नित्य

रुंधन्नष्टविधेः श्रुतीः मुखरयन्नष्टौ दिशः क्रोडयन् मूर्तीरष्टमहेश्वरस्य दलयन्नष्टौ कुलक्ष्माभृतः तान्यक्ष्णा
बधिराणि पन्नगकुलान्यष्टौ च संपादयन्नुन्मीलत्ययमार्यदोर्बलदलत्कोदंडकोलाहलः २७ गद्यं जा
मदग्न्यः त्रुट्यद्भैरवधनुःकोलाहलामर्षमूर्च्छितः प्रलयमारुतोद्धूतकल्पांतानलवत्संदीप्तरोषानलः
यद्भंजजनकात्मजाक्रांतराघवः पशुपतेर्महद्धनुः तद्धनुर्गुणरवेण रोषितस्त्वाजगाम जमदग्निजो मुनिः
२८ चूडाचुंबितकंकपत्रमभितस्तूणीद्वयं पृष्ठतो भस्मास्निग्धपवित्रलांछितमुरो धत्ते त्वचं रौरवीम् मौं
ज्या मेखलया नियंत्रितमधोवासश्च मांजिष्टकं पाणौ कार्मुकमक्षसूत्रवलयं दंडोऽपरः पैप्पलः २९ छ

नेनैकार्थत्वात् २७ यदुक्तं जामदग्न्यस्य वामनेत्रस्फुरणं तत्फलं विज्ञापयितुं पद्यमवतारयति त्रुट्यदिति स्पष्टम् तमेवानुवर्णयति यदि
ति २८ मुनिराजगामेति पूर्वेण संबंधः पृष्ठतस्तूणीद्वयं निषंगयुग्मं एतेन सर्वद्विती यांतं योज्यम् रुरुश्चित्रलोमृगः मंजिष्टया र

त्कृष्णाजिनकंवासः उक्तंच ब्रह्मव्रतधरोवासोवसीतारक्तमुत्तमंइतिपराशरः किंविशिष्टोमुनिः दंडः अर्शआदिभ्यो ऽच्प्रशस्तोदंडोस्या
स्तीतिदंडः ब्रह्मव्रतेपिक्षत्रदमनेपि पुनः किंविशिष्टः नकश्चित्परःश्रेष्ठोयस्मात्सः अपरः पुनः पैप्पलः पिप्पलोब्रह्मसूत्रं अस्यास्तीतिपैप्पलः
स्वार्थेतद्धितःअर्शआदिभ्यो ऽच्यज्ञोपवीतवान्इति अश्वत्थेब्रह्मसूत्रेचपिप्पलोस्त्रीगुणेष्वपिइतिधरणिः दंडपरंपैप्पलंइतिपाठेअ
श्वत्थस्यदंडंधत्तेबिभृयात्पैप्पलंदंडंब्रह्मव्रतधरः सदेत्युक्तत्वात् अपरःपैप्पलंदंडंधत्तेइतिवाअर्थः समुच्चयोयमलंकारः पदार्थो
नामनेकेषांयत्रैकस्मिन्निबंधनं एकयाक्रिययाविज्ञैःसमोक्तोनिसमुच्चयः वैरिणोरपिवीरशांतरसयोस्त्रयुक्त्यायोजनं अदोषा
यमुक्त्याकृतोपिसंयोगस्तयोर्बाटनदुष्यतीत्युक्तत्वात् एवंभूतोजामदग्न्यःसंप्राप्तइत्यन्वयः २९ पृथुलौमांसलौभुजावेवशिला

आजन्मब्रह्मचारीपृथुलभुजशिलास्तंभविभ्राजमानज्याघातश्रेणिसंज्ञांतरितवसुमतीचक्रजै
त्रप्रशस्तिः वक्षःपीठघनास्त्रव्रणकिणकठिनेसंक्षुण्वानःपृषत्कान् प्राप्तोराजन्यगोष्ठीवनगज
मृगयाकौतुकीजामदग्न्यः ३०

स्तंभौतयोर्विभ्राजमानायाज्याघातश्रेणिप्रत्यंचिकास्फोटनपंक्तिःतस्याःसंज्ञया
सूचनेनांतरितास्वस्मिन्विज्ञापितापृथ्वीचक्रस्यविजयस्यप्रशस्तिर्येनसः नामसूचनयोःसंज्ञेतिविश्वः वक्षः पीठेपृषत्कान्बाणान्
संक्षुण्वानः तीक्ष्णीकुर्वाणः घनानिघानि अस्त्राणितेषांव्रणैः यः किणः मांसासृग्विवर्तः तेनकठिने मांसासृग्मरणं
किण इतिधरणिः क्षत्रियापवनगजास्तद्धननार्थंयामृगयातस्यांकौतुकमस्यास्तीति ३० ३० ३० 

३० ५ ५ ५ ५ ५ ५ ५ ५ ५

एवंभूतमेनंदृष्ट्वा लक्ष्मणो रामंस्मारयति हे राम अयं सोस्ति स कः यः भैरवसंगरे अतिभयंकरे रणे उद्धृतं अनस्त्रं यथा स्यात्तथा कुठारेण परशुना अर्जुनस्य राज्ञः कंठं छित्वा पूर्वं मूलाद् उत्कृत्य पश्चात् जवात् वेगेन बाहु सहस्रं कांडं कांडं खंडं खंडं अखंडयत् ननु अर्जुनोस्ति बल इति चेत्तत्राह सप्तभिः समुद्रैः मुद्रिता वेष्टिता व्याप्तमती महीतस्याः पालकस्य किंविशिष्टं कंठं अतिजरठं अतिकठोरं समौ जरठकर्कशाविति विश्वः कीदृग्बाहु सहस्रं रेवा नर्मदा तत्तीर निरोधाय हेतुभूतं गहनं स्त्रीभिः क्रीडन् येन भुजसहस्रेण सरित्सवाहमेवारुणत् तद्भुजसहस्रं केन हेतुना अखंडयत् वर्षीयसा वृद्धिंगतेन पितृवधजन्यक्रोधेनेत्यर्थः ३१ रामंस्मारयित्वा पुनस्तत्परशुंस्मारयति येनेति यस्य परशुरामस्यासौ कुठारो विश्रुतः सर्वतो विख्यातः सोयमिति पूर्वेणैव संबंधः असौ कः येन कुठारेण स्त्रीबालवृद्धा वधि स्त्रियश्च बालाश्च वृद्धाश्च तत्सर्वं तं कृद्धु नन विधानं तस्मिन् प्रवृत्ते सति भूरिच्युतरुधिरसरिद्वारिपूरे अभिषेकः सर्वहननव्रतपूर्ति

सोयंसप्तसमुद्रमुद्रितमहीपस्यार्जुनस्योद्धृतंछित्वाभैरवसंगरेतिजरठंकंठंकुठारेणायः रेवातीरनिरो
धहेतुगहनंबाहुसहस्रंजवात्कांडंकांडमखंडयत्पितृवधामर्षेणवर्षीयसा ३१ येनत्रिःसप्तकृत्वोनृप
बहलवसामांसमस्तिष्कपंकप्राग्भारेकारिभूरिच्युतरुधिरसरिद्वारिपूरेभिषेकः यस्यस्त्रीबालवृद्धावधि
निधनविधौनिर्दयोविश्रुतोसौराजन्योच्चांसकूटक्रथनपटुरटन्घोरधारःकुठारः ३२

स्नानं अकारि कृतं पूर्णां कावार्तेति भावः किंविशिष्टे वारिपूरे नृपाणां याबद्धीवसामांसं च मस्तिष्कं मेदइति भाषायां तेषां प्राग्भारः समूहो यस्मिन् शिर्षण्यमांसं मस्तिष्कमिति विश्वः प्राग्भारव्रजसंमर्दाइत्यपि किंविशिष्टः कुठारः राजन्यानां उन्नतांसा एव कूटाः गिरयः तेषां क्रथने दारणे पटुः रटंती घोरा धारा यस्य सः क्रथनोज्ज्वासनीत्यपीत्यमरः ३२ ५ ५ ५ ५

भोमुनेमन्मथोन्माथिनः रुद्रस्यतद्धनुः मय्येवमासुपश्लिष्यमाणमाघाद्द्विधाकृतंमध्यतोभग्नंदृश्यते औपश्लेषकोयमाधारः भुविएवं
सतिभुमौएवंधनुर्भंगंकृत्वासतिवर्तमानेअन्यत्स्रगमंसमौनिर्मोककंचुकौम्लानंशत्रूणांहर्षकारित्रिपुरंइंधनंदाह्यंयस्यतत् ३३
घ्रातःस्तोमःसमूहोस्त्रीअन्यत्स्रगमं स्फीतेनफूत्कारेणप्रफुल्लाभ्यांनासापुटाभ्यांनासाविवराभ्यांउद्गीर्णोबहिर्भूतः प्रभूतोम
हान्गर्वोअहंकारोयस्यतादृशारोषानल एवकालकूटंविषंतस्यधूमस्तोमेनाच्छादितमावृतंदिशांमंडलंसमूहोयेनदीकांतरान् ३४

गद्यं जामदग्न्यः क्रोधंनाटयित्वाह केनेदंकुपितकालदंतयंत्रांतरालमिच्छताधनुर्भग्नम् रामः साशंकम्
पार्वत्यानिजभर्तुरायुधमितिम्लानंयदभ्यर्चितंनिर्मोकैनवबासकेनवलितंयस्मादरंनंदिना भव्यंयत्त्रिपु
रेंधनंधनुरिदंतन्मन्मथोन्माथिनः सत्येवंमृषिरामनामनिभुविद्विधाकृतंदृश्यते ३३ ग॰ जामदग्न्यः-
स्फीतफूत्कारप्रफुल्लनासापुटकोटरोद्गीर्णप्रभूतगर्वानलो च्छलितकालकूटधूमस्तोमाच्छादितदि
ङ्मंडलः ३४ अरेरे निजकुलकमलिनीप्रालेयवर्षदाशरथेकथमकांड प्रचंडदोर्दंडकोदंडखंडनचंडि
माडंबरेणापूरितंजगत्त्रयम् सकलवसुमतीमंडलाखंडलकुमुदिनीपक्षलक्ष्मीहरणकिरणमालिनंनमां
वेत्सियेनोक्तः कार्तवीर्यः ३५

अरेरेइत्याक्षेपे अकांडमनवसरंप्रचंडौयौदोर्दंडौतयोः कोदंडखंडनरूपोयश्चंडि
माचंडत्वंतदाडंबरेणजगत्त्रयंकथमापूरितंकांडोस्त्रीदंडबाणार्ववर्गावसरवारिषुइत्यमरः जातंमांत्वंनवेत्सि किंभूतंसकलवसुम
तीपृथ्वीतस्यामंडलस्ययेआखंडलाइंद्राः राजानस्तएवकुमुदिन्यस्तासांपक्षस्ययालक्ष्मीराज्यादिरूपातद्धरणेसूर्यं तंकंयेनकार्तवी
र्योनृपइत्युक्तः ३५

तदेवाहसहस्रेति नर्कव्यायं शिषंस्रगमम् ३६ हेमंदकार्याकार्यमूढमेस्वभावः सर्वभूतैर्नविदितःनज्ञातो अपितुविदितएव अहो यद्भवतानज्ञातस्तदाश्चर्यमित्सिहोपदेनध्वनितंस्वभावमेवद्योतयति किंविशिष्टस्यमे क्षत्रसंतानेयोरोषस्तस्मात् गर्भानपिउत्कृ त्योत्कृत्यउदरान्निःसार्यनिःसार्यशकलयितुंखंडयितुंउद्दामस्यगतदयस्य पुनःसर्वतः सर्वान्वृद्धान्बहून्तरुणरूपान्राजवंश्यान् राज्ञांवं शेषुजातान्क्षत्रियान् एकविंशत्यवधिएकविंशद्वारंविशासतः घातयतः पुनः पित्र्यंपितॄणामिदंपित्र्यंतर्पणादिप्रयोगेद्वितीयामंदा यमानः क्रोधाग्निर्यस्ययथापित्र्यमकरवंतथातथाशांतक्रोधोऽभवमितिभावः किंविशिष्टंसर्वतः इतिसर्वंयथास्यात्तथानद्र

सहस्रबाहुस्त्वमहंद्विबाहुस्त्वंसैन्ययुक्तोस्म्यहमेकएव त्वंचक्रवर्तीमुनिनंदनोऽहंतथापिनोपश्यतुतर्क मर्कः ३६ उत्कृत्योत्कृत्यगर्भानपिशकलयितुंक्षत्रसंतानरोषादुद्दामस्यैकविंशत्यवधिविशासतःसर्वतो राजवंश्यान् पित्र्यंतद्रक्तपूर्णप्रतिवचनमहोमंदमंदायमानक्रोधाग्नेःसर्वतोमेनखलुविदितःसर्वभूतैःस्व भावः ३७ आश्चर्यंकार्तवीर्यार्जुनभुजविपिनच्छेदलीलाविदग्धः केयूरग्रंथिरत्नोत्करकषणरणत्कार घोरःकुठारः तेजोभिःक्षत्रगोत्रप्रलयसमुदितद्वादशार्कानुकारः किंनप्राप्तःस्मृतिंतेस्मरदहनधनुर्भ गपर्शुत्सुकस्य ३८ रक्तपूर्णप्रतिवचनंतेषांक्षत्रियाणांरक्तेनपूर्णंनिष्पादितंप्रतिवचनप्रतिकरणीयंयस्मिन्तत् यत्ति लकुशयवादिसूचकंवचनंतद्रक्तेनैवसंपादितंइतिभावः एवंभूतोपिभवतानज्ञातस्तदाश्चर्यम् ३७ पुनराश्चर्यमनुवदति हेरा ममदीयकुठारः तेतव स्मृतिंस्मरणविषयंनप्राप्तः किंतुप्राप्तएवमामनादृत्यैतत्कृतमितिभावः ममानादरणमेवाश्चर्यं किंविशिष्टः कुठारः कृतवीर्यस्यापत्यंकार्तवीर्यश्चासौअर्जुनश्चतस्यभुजाएवविपिनंतस्यकर्तनलीलायांविदग्धःपुनःतेजोभिरुग्रःदुःप्रेक्ष्यः अन्यत्स्रगमं कषणंघर्षणंसमइतिधरणिः बृहत्वसुत्करोव्रातइत्यपि ३८ ७

बाह्वोरिति त्र्यंबकोरुद्रस्तस्येदं धनुस्त्रैयंबकं तनिमेतिवापाठः तत्रतनोभार्वः तनिमानिःसारत्वमितिडिंभोमाणवकःशिशुरितिवि
श्वः एतेनधनुर्भंगस्येषत्करत्वंकथितं ३९ इदानींगर्भिताक्षेपमाविष्करोति अयमिति स्रगमं ४० पुनरपिसवैदग्ध्यमाक्षिपतिभो
ब्रह्मन्निनिस्रगमं ४१ दृष्टंज्ञातंदिव्यास्त्राणांपारमंतोयेनसविप्रेविषयेशस्त्रग्रहणंगुरुभारोयस्मिन्तादृशात्साहसिक्यात् श्रोत्रिये

रामः सभयं बाह्वोर्बलंनविदितंनचकार्मुकस्यत्रैयंबकस्यमहिमाततएषदोषः तच्चापलंपरशुरामममम
क्षमस्वडिंभस्यदुर्विलसितानिमुदेगुरूणाम् ३९ अयंकंठःकुठारस्तेकुरुरामयथोचितम् निहंतुंहंतगो
विप्रान्नशूराररघुवंशजाः ४० भोब्रह्मन्भवतासमंनघटतेसंग्रामवार्तापिनःसर्वेहीनबलावयंबलवतां-
यूयंस्थितामूर्धनि यस्मादेकगुणंशरासनमिदंसुव्यक्तमूर्वीभुजामस्माकंभवतोयतोनवगुणंयज्ञो-
पवीतंबलं ४१ जानःसोहंदिनकरकुलेक्षत्रियःश्रोत्रियेभ्योविश्वामित्रादपिभगवतोदृष्टदिव्यास्त्रपा
रः अस्मिन्वंशेकथयतुजनोदुर्यशोवायशोवाविप्रेशस्त्रग्रहणगुरुणःसाहसिक्याद्बिभेमि ४२ परशु-
रामःसाभ्यसूयम् येनस्वांविनिहत्यमातरमपिक्षत्रास्त्रमभ्यासवस्त्वादाभिज्ञपरश्वधेनविदधेनिःक्षत्रि
यामेदिनी यद्बाणव्रणवर्त्मनाशिखरिणःक्रौंचस्यहंसच्छलादद्याप्यस्थिकणाःपतंतिसपुनःक्रुद्धोमुनि
र्भार्गवः ४३ स्त्रीषुप्रवीरजननीजननीतवैवदेवीस्वयंभगवतीगिरिजापियस्यै त्वद्दोर्वशीकृतविशा
खमुखावलोकव्रीडाविदीर्णहृदयास्पृहयांबभूव ४४ भ्यः वेदाध्ययनाग्निहोत्रादिकर्मणाश्रेष्ठेभ्यःस्रगमम् ४२ ४३



किंचित्क्षुभ्यंज्ञात्वापुनस्तोनिरुक्तीधिति भोमुनेप्रवीरजननीमहत्वेशूरमाताएवपदेननान्या कुतएवमित्यपेक्षायामाह यस्यैतत्क

नन्वेगिरिजास्पृहयांबभूवेति अहंचेदकूपुत्रमातास्यामिति स्पृहायांहेतुमाह त्वद्दोर्वशीति विशाखः शिखिवाहनः स्कंदोयदा
क्रौंचगिरिजयार्थंगतस्तदा परशुनायुद्धेपराजितइति ४५ पूर्वंगरुडध्वजस्यइदानीमस्मदीयंइदंकार्मुकंआकर्षरणेनात्र
धनंयुद्धमितिधनंजयः ४६ आकष्टेधनुषिसुनिधर्षणा अनाकृष्टेममपराजयइतिधर्षणामर्षौताभ्यांमूर्च्छितः ४६ पुरइति अद्यप्रभृ
तिरामः परशुरामः ममपुरोजन्माब्राह्मणोन पराजयहेतुत्वात् स्वयमप्यहंरघुकुलजातानांराज्ञांपुत्रःपौत्रोवान ब्राह्मणावमान
नहेतुत्वात् तेषांतदभावात् अतोयंभूलोकस्थोजनः अथकौतुकार्थंआगतोपिदेवादिगणः मांवीरंकलयतुजानातु अवीरंवानशौ
र्यं ब्राह्मणे हिमेइत्युक्तत्वात् मयादुष्टस्यास्यद्विजस्यदमनदीक्षायांपरिकरः कटिस्थवस्त्रग्रंथिर्बद्धोस्ति स्यात्सज्जत्वंपरिकरइति

हारःकंठेविशतुयदिवातीक्ष्णधारःकुठारःस्त्रीणांनेत्राण्यधिवसतुस्फुरत्कज्जलंवाजलंवा संपश्यामोध्रुवम
पिस्फुरत्वंप्रेतभर्तुर्मुखंवायद्वातद्वाभवतुनवयंब्राह्मणेषुप्रवीराः ४७ परशुरामः तथ्यपिसाभ्यसूयं तच्चाप
मीशाभुजपीडनप्रीतिसारंप्रागप्यभज्यतभवांस्तुनिमित्तमात्रम राजन्यकप्रधनसाधनमस्मदीयमाकर्षका
र्मुकमिदंगरुडध्वजस्य ४६ रामोतिधर्षणामर्षमूर्छितः पुरोजन्मानाद्यप्रभृतिममरामःस्वयमहंनपुत्रः
पौत्रोवारघुकुलभुवांचाक्षितिभुजाम् अवीरंवीरंवाकलयतुजनोमामयमयंमयाबद्धोदुष्टद्विजदम
नदीक्षापरिकरः ४७ भूमात्रंकियदेतदर्णवमितंतन्निर्जितंहार्यतेयद्वीरेणभवादृशेनदद्तात्रिःसप्त
कृत्वोजयम् डिंभोयंनवबाहुरीदृशमिदंघोरंचवीरव्रतंतत्क्रोधाद्विरमप्रसीद भगवन्जात्यैवपूज्योसिनः ४८

विश्वः ४७ एतन्मनसिविचार्यतत्तुल्यःपुनरपिशांत्यैववदति भूमात्रमितिमकर्णार्थःस्फुबोधएव कटाक्षमुपक्षिपति यदातत्रविजये

ह॰ना॰
९

लाभत्रयमस्ति तदैश्वर्यग्रहणं आत्मजयघोषणं शत्रुहननंचेति तेषांतु तत्पराजये किमपिनास्तीत्याह यत् भूमात्रंनत्वन्येलो
कास्तत्राप्यर्णवमितंनतुसर्वाभूः तत्रापिभवादृशेनवीरेण त्वादृशेनशूरेणतत्रापित्रिःसप्तकृत्वः नत्वेकवारंतत् हार्यंनेत्वया
त्याज्यते आदायगृह्यन इति एतत् किंयत् नकियदिति तदपिभूमात्रंतवनास्तीतिभावः किंविशिष्टेन वीरेण जित्वाब्राह्मणे-
भ्योददता एतेनैश्वर्यग्रहणमपिनास्ति तर्हिजयोभविष्यतिसोपिनास्तीत्याह अयंश्लक्ष्णोजनः नवृबाहुस्तरुणइतित्वंतु
डिंभोवृद्धः डिंभोस्त्रीबालवृद्धयोरितिविश्वः वीरव्रतंईदृशंघोरंबालवृद्धोपरित्यक्तशस्त्रंहन्यान्नचक्रकमितिराजनीतौकी
दृशंवीरव्रतंअजयंवृद्धजयेअजयमेवेत्यतोजयोपिनास्ति यथाकथंचिदस्मद्रिपुहन्याद्विचक्षणः इतिवाक्याद्वृद्धोपिहंतव्यश्चेत्तत्रा
ह हेभगवन् त्वंनोस्माकंजात्यैवब्राह्मणजात्यैवपूज्योसिनक्षात्रेण अतः पूज्येवधाभावः तस्मात्त्वंक्रोधाद्विरमप्रसीदच आत्मवधेना
स्मद्यशोमादेहीत्यभिप्रायः संकरोयमलंरः ४८ इत्युक्तेउत्कटमात्मक्षात्रपणसाफल्यंश्रावयति द्विःशरमितिरूगमम ४९

द्विःशरंनाभिसंधत्तेद्विःस्थापयतिनाश्रितान् द्विर्ददातिनचार्थिभ्योरामोद्विर्नाभिभाषते ४९ रामस्तदादाय
धनुःसहेलंबाणंगुणेयोज्ययदाचकर्ष भातिस्मसाक्षात् मकरध्वजःस्वर्गतिंप्रविच्छेदचभार्गवस्य ५० तच्चा
पमाकर्षतिताटकारावाकर्णमाकर्ण्य विशालनेत्रा सासूयमैक्षिष्टविदेहजासोकन्यांकिमन्यांपरिणेष्यतीति ५१

मकरध्वजः कामरूपः स्वर्गगमनं अत्रेयंकथा रामस्यबाणोनिरर्थकोनस्यात् चेन्मुनयेत्यजतितर्हिब्राह्मणवधःस्यात् भूमौचेत्तर्हि
भूतपीडास्यात् एतत् ज्ञात्वापरशुरामस्यस्वर्गगमनमेवविच्छेदेतिभावः ५० तदाकर्षणेसीतावृत्तमाह तच्चापमितितच्चापंत
स्यमुनेश्चापंतारकारावितिपदेनरामस्यस्त्रीषुनिर्दयत्वमारोपितंसीतया अन्यस्त्रीपरिणयनमेवतादृकावन्ममापिमरणमिति
भावः ५१

अं॰
१

९

पूर्वार्द्धे मुनिशौर्यकीर्तनेन रामशौर्याधिक्यं द्योतितं अनौद्धत्यं तु ब्राह्मणस्वभाव एवेति द्योनितं ब्राह्मण्यं ब्राह्मणस्वभावश्चेदं दैन्यं तत्र प्रण-
योस्यास्तीति ५२ इदानीं मुनिः श्रीरामं स्तौति धावद्धूर्जटीति यद्ययं देवो रामो न प्राप्स्यत् नावतरिष्यत् तर्हि अस्यां भुमौ पदं कः अधा
स्यत् कुतोनाधास्यदित्यपेक्षायामाह धावन्सत्वरं यथार्थं त्वरमाणः यो धूर्जटेः रुद्रस्य धर्मपुत्रः शिष्यः तस्य यो परशुः तेन क्षुण्णाया अखिल
क्षत्रियश्रेणी पंक्तिः तस्याः शोणितेन पिच्छिला आच्छादिता वसुमती जातेति शेषः रुद्रशिष्यत्वेन संहारकत्वं सूचितं प्रवीणदक्षिणो विज्ञ

भार्गवः सानुनयं यः कार्तवीर्यस्य भुजासहस्रं चिच्छेद वीरो युधि जामदग्न्यः स सायके रामकराधिरूढे ब्रा
ह्मण्यदैन्यप्रणयी बभूव ५२ धावद्धूर्जटिधर्मपुत्रपरशुक्षुण्णाखिलक्षत्रियश्रेणीशोणितपिच्छिला वसु
मती को स्यामधास्यत्पदम् त्रैलोक्याभयदानदक्षिणभुजावष्टंभदिव्योदयो देवो यं दिनकृत्कुलैकतिल
कोन प्राप्स्यद्यदि ५३ रामः पश्चाज्जामदग्न्यचरणकमलयोर्निपत्य उत्पत्तिर्जमदग्नितः स भगवान्
देवः पिनाकी गुरुर्वीर्यं तत्तु न यद्गिरामनुपथं व्यक्तं हि तत्कर्मभिः त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानाव
धिः सत्यब्रह्मतपोनिधेर्भगवतः किं किं न लोकोत्तरम् ५४ ७ ७ ७ ७

इति विश्वः उत्तंभने रवौ विष्णौ वष्टंभः स्त्रियाम इत्यपि अत्र सूर्यउत्तंभनं वा अन्यत्सुगमम् ५३ उत्पत्तिरिति सत्यं यथार्थभाषण
म् ब्रह्म वेदः तपः कायक्लेशः एतानि निधीयंते यस्मिन् तत्संबुद्धौ हे सत्यब्रह्मतपोनिधे भगवतः पूज्यस्य तव लोकोत्तरं लोकेभ्यो तिरिक्तं किं
किं न अपितु सर्वमेवास्ति तदेव द्योतयन् निजजन्मगुरुवीर्यत्यागैस्त्वादृशः कोपि नास्तीति ध्वनितम् अन्यत्सुगमम् ५४ ७ ७

महत्तेजऐश्वरंक्षात्रंवा अन्यत्स्फुगमम् ५५ निःसाणेति रसालगोमुखावस्लीकाहलःसंकरध्वनाविति विश्वः निःसाणासाहि नीवाद्यविशेषः ५६ रामेइति प्रवराःदेवाःप्रकृष्टोवरोयेभ्यस्तेतत्पूरंस्वर्गःदेषस्त्रीसमूहानां नेत्रश्रेणीपद्मानियस्मिन्ताद्दशेमुहूर्तेरमयतीतिरमणःसचासौरतिपतिश्चन ह्वाणभिन्नासतीयोगनिद्रांगनाइव आसीत् एतेनदिग्धप्रलयसाक्षिकोदर्शितःउक्तंचस रसोदधौ स्फुरवदुःखाभ्यांचेष्टाज्ञानविलपनंयदानंदाप्रलयइति किंविशिष्टंतत्पाणिस्पर्शसौख्यंसच्चिदानंदरूपंमोक्षस्फुखांतर

ज्ञात्वावतारंरघुनंदनस्यस्वकीयमालिंग्यततोवगाढम् विन्यस्यतस्मिन्जमदग्निसूनुस्तेजोमहत्क्षत्रवधान्निष्टत्तः ५५ निःसाणमर्दलरसालगभीरभेरीझंकारतालरवकाहलनादजालैःपूर्णबभूवधरणीगगनांतरालंपाणिग्रहेरघुपतेर्जनकात्मजायाः ५६ रामेश्यामेसकामेस्पृशतिजनकजापाणिपद्मंप्रदत्तंपित्रानेत्रालिपद्मेप्रवरपुरवधूमंडलानांमुहूर्ते तत्पाणिःस्पर्शसौख्यंपरमनुभवतीसच्चिदानंदरूपंतत्रासीद्बाणभिन्नारमपारतिपतेर्योगनिद्रांगतेव ५७ वैवाहिकंकुशिकनंदनजामदग्न्यवाल्मीकिगौतमवसिष्ठपुरोहिताद्यैः रामोविधिंसहसमाप्यसलक्ष्मणस्तैरानंदयनूजनकजांस्वपुरंजगाम ५८ इतिश्रीहनुमन्नाटकेप्रथमोंऽकः१

श्रीरामः॥ प्राप्यायोध्यांस्वजनपरमोत्साहसंभावनाभिर्नत्वामूर्ध्नाखिलगुरुजनंसीतयालक्ष्मणेन रामोयामत्रयमपिकथंमारनाराचभिन्नोनीत्वासीताकिमितितुरगांस्ताडयामासदंडैः १

गमिति ५७ वैवाहिकमिति सलक्ष्मणोरामएतैः कुशिकनंदनादिभिः कृत्वावैवाहिकंविधिंसमाप्यतैःकुशिकनंदनादिभिः सहस्वपुरींजगामेत्यन्वयः सलक्ष्मणइतिपदेन सीतानुजयोर्मिलयालक्ष्मणस्यापिविवाहोद्योतितइतिध्वनितम् ५८ इतिश्रीमिश्रमोहनदासविरचितायांहनुमन्नाटकदीपिकायांजानकीस्वयंवरोनामप्रथमोंऽकः १ ॐ

अथतयोस्तत्रसंभोगमधुरंद्योतयितुं पद्यमवतारयति प्राप्येति प्रथमयामस्रुप्रवेशकौतुकेननीतस्तदुग्रेयामत्रयंकथमपिनी
लाकथमप्यत्रहेतुमाह मारनाराचभिन्नइति अन्यत्स्रुगमं किमित्येतस्यार्थंकविरेवद्योतयतितत्रनास्मद्दोषः १ सर्वेति मेदुरंस्नि
ग्धचित्रयोरिति धरणिः बलात्सीतामेदुरेचित्रेतुरगांस्ताडयामासरामस्तुमंदुरायांवाजिशालातुमंदुरेत्यमरः मेदुरंचमंदुरा

सर्वलक्षणोपेतान्देवभूपालयोग्यान्मेदुरमंदुरायांतुरगानवलोक्यमारज्वराकुलितचित्तभ्रांसावधूप
त्रयोमंगलावलोकनायागतस्यभगवतस्तरणेः किरणमालिनस्तुरगाइमेस्वभावनेजस्विनस्ताडनस
सोढारस्ताडिताःपुनःपुनःभगवंतंभास्करंद्रुतगत्यास्तान्चलंनयंत्विति बुध्यादाशरथिर्जनकपुत्रीचदंडा
घातैस्तुरगान्ताडयामास निशायांप्रौढायांशीघ्रमावयोःसंगमोभवत्वित्यभिप्रायः २ अस्तंयातेसुकुल
नलिनीबांधवेसिंधुपुत्रेप्राचीभागेप्रमदमुदितेपक्कनारिंगपिंगे रामःकामंग्ररुजनगिरामंदिरंसुंदरस्त्वं
रम्भोरूस्तंजनकतनयानंदयंतीजगाम ३ ७ ७ ७ ७ ७

चेतिद्वंद्वैक्यम् एतेनोन्मादावस्थाद्योतितासोत्कारसोदधौ प्रौढानंदापन्नोर्विरहाद्योत्द्भमःसउन्मादः २ अथतयोः रतिग्रह
प्रवेशमाह अस्तमिति मुकुलितायाः नलिन्याः बांधवेविकासहेतौसूर्येअस्तंयातेसतिप्राचीभागेपूर्वदिग्भागेप्रमदंयथास्यात्त
था सिंधुपुत्रेचंद्रेउदितेसतिरामंनंदयंतीजगामकामंअनिच्छंयथास्यात्तथा अकामानुमतौकामः स्पृहायामपिसंमतइतिध
रणिः एतेनत्रपाद्योतितास्तुंदरंरामंमंदिरंवा उक्तंचकलाविलासे रम्यपक्षिरवानंदवनचित्रकुलाकुलं स्वस्तंबुलाहर्शयनंगृहंसुरत
स्तुंदरम् ३

पुनरपिसिंहावलोकनन्यायेनचंद्रोदयमाविःकरोति प्राचीभागेइति तरणिविरहिण्यपिप्राचीभागेसरागेसतिएतेनचंद्रदर्शनात्
सद्योपिस्त्रियःपरपुरुषानुरागंकुर्वंतीतिध्वनितंयतः पूर्वस्याः दिशस्तरणिरतिप्रियस्तथापिसरागाजातेतिभावः यत्रोदेतिरविः
सैवप्रियानस्याश्वस प्रियइत्यागमोक्तत्वात् सावकाशइतिग्रहादिदर्शनमेवतत्रावकाशः तमसिशमंनाशंगतेसतिकोकाश्च
क्रवाकास्तेषांलोकेसमूहेशर्वरीभूपतिश्चंद्रइति ४ ननुकोकानाकुतःशोकइत्यपेक्षायामाह भविष्येइतिगद्यं पुनश्चंद्रमेववि
शिनष्टि स्वैरमित्यादिचतुर्भिः युवतयश्चयुवानश्चयूनस्तेषांयूनां अत्रैकशेषः पुमान्स्त्रियेत्यनेन स्त्रियासहोक्तौपुमान् शि

प्राचीभागेसरागेतरणिविरहिणिक्रांतसमुद्रेसमुद्रेनिद्रालौनीरजालौविकसितकुमुदेनिर्विकारेचकोरे
आकाशेसावकाशेतमसिशममितेकोकलोकेसशोकेकंदर्पेनल्पदर्पेवितरतिकिरणान्शर्वरीसार्वभौ
मः ४ ग॰ भविष्येरामशापेत्यंतनिकटवर्तिनिकोकलोकानामकस्मान्महोत्पातनिमित्तंपार्श्वस्थितानाम
पिप्रियाणामनवलोकतः शोकसंभवः स्वैरंकैरवकोरकान्विदलयन्यूनांमनःखेदयन् अंभोजानिनि
मीलयन्मृगदृशांमानंसमुन्मूलयन् ज्योत्स्नांकंदलयन्तमःकवलयन्नंभोधिमुद्वेलयन्कोकानाकु
लयन्दिशोधवलयन्निंदुःसमुज्जृंभते ५ अपिच अद्यापिस्तनतुंगशैलशिखरेसीमंतिनीनांहृदि
स्थातुंवांछतिमानएषधिगितिक्रोधादिवालोहितःउद्यद्दूरतरप्रसारितकरःकर्षत्यसौतत्क्षणात्फुल्ल
त्कैरवकोशनिःसरदलिश्रेणीकृपाणंशशी ६ ष्यतइति कंदएवकंदलःस्वार्थेलच्समूहंकुर्वन्नित्यर्थः अन्यत्स्पष्टम
म् ५ तत्रोदयेसरागंचंद्रमवलोक्यकविरुत्प्रेक्षते अद्यापीति असौशशीतत्क्षणादेवतदुदयमात्रादेवफुल्लंतोयेकैरवास्तए

वकोशारवड्गकोशास्तेभ्योनिःसरंतीयाअलिश्रेणीभ्रमरपंक्तिः सैवकृपाणःखड्गः तमाकर्षतिप्रसह्यगृण्हातिदिवानत्रसकृप्ताअलयश्चंद्रोदयादे
वसर्वेपंक्तीभूयएकदैवनिःसरंतिइतिप्रसिद्धंकीदृशःउद्यन्उद्गच्छन् इतिक्रोधादालोहितइव इतिकिंएषःमानःसीमंतिनीनांहृदिअ-
द्यापिमध्युषितेसतिस्थातुंवांच्छतीति कीदृशे हृदिस्तनावेवतुंगेशैलशिखरेयत्र ६ रागमुत्प्रेक्ष्यपांडुतामुत्प्रेक्षते यातस्येतिअ
नंतरंपक्षांतरेशीतकरः अस्तंयातस्यदिनकृतःसूर्यस्यवेषेणरागान्वितोजातः यादृगरुणोरविरस्तितादृगुदयेचंद्रोभूदितिभावः किंकुर्वन्

यातस्यास्तमनंतरंदिनकृतोवेषेणरागान्वितःस्वैरंशीतकरःकरंकमलिनीमालिंगितुंयोजयन् शीतस्पर्शमवाप्यसंप्रतितया
मुक्तेमुखांभोरुहेहासेनेवकुमुद्वतीवनितयावैलक्ष्यपांडुकृतः ७ कर्पूरैःकिमपूरिकिंमलयजैरालेपिकिंपारदैरक्षालिस्फाटि
कांतरैःकिमघटिद्यावापृथिव्योर्वपुः एतत्तर्कयकैरवक्लमहरेशृंगारदीक्षागुरोदिक्कांतामुकुरेचकोरसुहृदिप्रौढेतुषारत्विषि ८
अंगारकोस्काशनंचकोरमवलोक्याह अमृतममृतरश्मेर्मंडलस्यानुभूयद्विजचतुरचकोरप्रीतिरंगारकेषुप्रभवतिभवदीया
चेद्विधातुर्विधानंतदिहपुनरपिस्यात्कोन्यथाकर्तुमीशः ९ नूस्वैरंयथेच्छंकमलिनींसूर्यप्रियांआलिंगितुंकरंकिरणरूपंहस्तंयोजयन्

सन्भंप्रतिनिर्देवनंयाकमलिन्याशीतस्पर्शअवाप्यमुखांभोरुहेस्वकीयमुखारविंदेयुक्तेमुद्रितेसति रुद्धेइत्यपिपाठःकुमद्वतीवनितयाकुमु
दिनीएवचंद्रकांतानयाकृत्वायद्वैलक्ष्यंलज्जातिरेकस्तेनपांडुकृतःरागान्वितोपिपीतत्वमागतइतिकेनहासेनेवपरगामिनमेनंदृष्ट्वायकुमु
दिनीविकसनंतदेवहासःउक्तंच आत्मनश्चरितेयस्यज्ञातेन्यैर्यत्रजायते अपत्रपेतिमहतीतद्वैलक्ष्यमुदाहृतम् ७ रामःसखींप्रति कर्पू
रैरितिद्यावाभूमीचरोदसीत्समरःअक्षालिप्रक्षालितंकिंदिक्पूर्वासैवकांतातस्याःमुकुरेनतुल्येअन्यत्स्पष्टं ८ अमृतमिति भोद्विजचतुर
पक्षिविदग्धचकोर अमृतरश्मेर्मंडलस्यचंद्रबिंबस्यामृतमनुभूयचेद्भवदीयाप्रीतिः अंगारकेषुप्रभवतितत्तदाविधातुरीश्वरस्य-

विधानंपुनरप्यन्यथाकर्तुंकःपुमान्ईशःस्यान्नकोपीतिभावः ९ चक्रेति क्षीरसमुद्रात्जन्मप्रादुर्भावोयस्यएवंभूतोदेवश्चंद्रोजयति
तमेवविशिनष्टि अंधकारनिचयसेनायास्फारोविस्तारस्तन्नाशायचक्रंअविष्टलिंगत्वात्खंडत्वंराजहंसइवलोपेप्यत्रउणादिकः कुमुद
वनवधूनांबोधेविकासेसतिनिद्रायादरिद्रोयस्माद्यदुदयेविकसितत्वात्पुनर्नसंकोचइतिभावः रतिपतेर्बाणानांनिर्वाणस्तीक्ष्णीकरणंत
स्यशाणः उपलविशेषः यद्वानिर्वाणोमोक्षस्तस्यशाणः सहायकृत्कामबाणनिर्मुक्तोसत्यांसहाय्यकृदितिभावः निर्वाणस्तीक्ष्णमोक्ष

अथपंजरस्थामंदिरसारिकासखीनांस्वमंदिरगमनायाशिषंपठतिचक्रक्रीडाकृतांतस्तिमिरस्चयचमूस्फारस्सं
हारचक्रंकांतासंयोगसाक्षीगगनसरसियोराजतेराजहंसः संभोगारंभकुंभः कुमुदवनवधूबोधनिद्रादरिद्रो
देवःक्षीरोदजन्माजयतिरतिपतेर्बाणनिर्वाणशाणः १० इत्याकर्ण्यचंद्रमंडलशाणोत्तीर्णोरतिपतेर्बाणोजानकी
रामचंद्रयोर्वक्षस्थलेनिपततीतिश्लोकाभिप्रायमवगम्यनिष्क्रांतःसर्वआलिजनः आत्रापितरुणरात्रोशुक
सारिकादीनांपक्षिणांमधुरस्वरैर्मदनोर्मीसंसूचिता रामः अंकेकृत्वाजनकतनयांहारकोटेस्तलांतात्पर्यंकां
केविपुलपुलकांराघवोनम्रवक्त्रां बाणान्पंचप्रभवदतिजनःपंचबाणोप्रमाणैर्बाणैःकिमांप्रहरतिशनैर्व्याहरंतीजगाम
११ योरितिचरकःउत्तेजकोपलेशाणः पक्षेष्वात्मगतेपुमानितिधरणिः १० अथजानकीरामयोःशृंगारंवर्णयति अंकेकृत्वे
ति हारकोटेःहाराग्रभागस्यनलांतान्जनकतनयां अंकेकृत्वापर्यंकांकेपर्यंकमध्येनिनायआनयत्विपुलपुलकामेतेनसुखस्मि
तस्निग्धसात्विकोदर्शितःउक्तंचरसोदधौ साक्षादीश्वरयोगोयैस्तेसुरव्यामनीषिभिर्ज्ञेयाः इतिद्रढिमरतिप्रकारायेस्फुःस्निग्धाम
तास्तएवात्रइत्यपि शनैर्मनाक्उवाच बालायाः प्रभूतरोमांचदर्शनेनपंचबाणोप्यपरिमितबाणत्वांतिः ११

गाढंगाढमिति मानकीर्णामामास्पृशेत्यादिव्याजक्वनभाषिणीसीतासदयत्हृदयंच अनिलस्यागतायवायोरागमनाय आईषत् शिथि
लंचकार किंकृत्वा पुंडरीकाक्षोरामस्तद्वक्षः पीठंकमलमुकुलंतत्सदृशकोमलंकुचयोरपिकाठिन्यंमत्वाकीदृशीकामैः कामसंबंधिभावैः
पूर्णाकामकलाविदग्धाइत्यर्थः स्वामिना श्रीरामेणापिगाढंगाढंयथास्यात्तथा आलिंग्यस्फीतंनीतंस्फीताख्यंचुंबनंप्रापितंतदुक्तंकामा
वतारेनकारबहुलक्षिप्रहस्तांतवंचिनाधरं रभसागंडसंस्पर्शिस्फीतंतच्चुंबनंमतमिति कमलकलिकाकोमलंपुंडरीकाक्षवक्षःकुच

जानकी गाढंगाढंकमलमुकुलंपुंडरीकाक्षवक्षःपीठंकाठिन्यमपिकुचयोर्जानकीमानकीर्णा पूर्णाकामैःशिथि
लमनिलस्यागमायाचकारस्फीतंनीतंसदयत्हृदयंस्वामिनालिंग्यमत्वा १२ जानकीरामचंद्रयोः अन्योन्यंबाहु
पाशग्रहणरसभराशीलिनोस्तत्रयूनोर्भूयोभूयःप्रभूताभिमतफलभुजोर्नंदतोर्जातएषः संसारोगर्भसारोनव
इवमधुरालापिनोःकामिनोर्मांगाढंचालिंग्यगाढंस्वपिहिनहिनहीतिच्युतोबाहुबंधः१२ काठिन्येनव्यथितंमाभूदिति

शंकयाबाहुपाशमीषत् विसृज्य पवनप्रवेशायत्हृदयंशिथिलमाचकारेतिभावः १२ अन्योन्यमिति तत्रसंभोगसमयेभूयोभूयोनंदतोर्मुहुर्मु
हुः स्मितवर्धमानयोर्यूनोः जानकीरामचंद्रयोः एषसंसारोनव इवजातः अज्ञातरसप्रदोजातइतिभावः गर्भेसारः स्वरूपंयस्यसःकीदृश
योः परस्परंबाहुपाशग्रहणेयोरसातिरेकस्तमभिव्याप्यशीलितुंशीलंययोस्तौ तथापुनः कीदृशयोः प्रभूतंबहुअभिमतंइष्टफलं
कामफलंभुंजतोःयथेच्छानेककलाविदग्धयोरितिपुनरित्यध्याहारः कामिनोः कामरसवर्द्धनविदग्धयोरितिबाहुबंधःच्युतः शिथिलो
जातइति किंरामेणोक्तंमाइतिमांगाढंआलिंग्यस्वपिहिसीतयोक्तंनाहिनहीति अनएवमधुरालापिनोः स्वपिहिनहिनहीत्यादिमाधुर्यंश्यामं
कामसमाकृतिंराममालिंग्यउत्कंठितापिकामाकुलापिजानकीकुलसंभूतिलज्जयानवसंगमनयाचभर्तृमनोहरणायचनहिनहीति
व्याहृत्यदुःसहमपिमारज्वरंसहतेस्म १२

वक्रेइति चंदनंखदिरंघनः कर्पूरः ताभ्यामावृतः पूगः क्रमुकोगर्भेयस्यास्तांचूर्णकस्तूरिकागर्भखदिरंचंदनंमतमितिधरणिः १४ ततःकिं-
जातमित्यपेक्षायामाह मंदंमंदमिति जनकतनयावीटिकांचतुर्धाविधायतत्रापिमंदंमंदंशनैःशनैः तत्रापिस्वैरंस्वसुखानुसारंयथात
थाजन्हे हृतवतीचतुर्धात्वेहेतुः कुतस्तस्यरामस्ययत् अधरमधुतस्मिन् यत्प्रेमतस्मादेकदैवग्रहणेनदधरायोगः स्यादितिभावः
मंदंमंदत्वेहेतुः कीदृशीमिलिताक्षीतदधरस्पर्शानंदान्नेत्रमीलनेसतितद्धरणायोगात् मंदत्वंतदनुग्रहणानंतरंतस्यावीटिकायाश्च
तुरःकवलान् धर्मार्थकाममोक्षान् तत्प्राप्तिसमान्मेने रामोपितस्याः सीतायामधुरंअधरंपीत्वातदेवाधरंब्रह्ममेने ब्रह्मानंदसमं

वक्रेणततःफणिलतादलवीटिकांस्वेविन्यस्यचंदनघनावृतपूगगर्भां रामोऽब्रवीदयिगृहाणसुखेनबालेतन्वच्छ-
द्मनानदधरंमधुरंमपातुम् १४ मंदंमंदंजनकतनयातांचतुर्धाविधायस्वैरंजन्हेतदधरमधुप्रेमतोमीलिताक्षी
मेनेतस्यास्तदनुकवलान्धर्मकामार्थमोक्षान् रामः कामंमधुरमधुरंब्रह्मपीत्वापितस्याः १५ भातिस्मचित्तास्थि-
तरामचंद्रंसारुंधतीनिर्गमशंकयैव स्तनोपरिस्थापितपाणिपद्मासंजातनिद्रासरसीरुहाक्षी १६ रामः तत्रमै-
थिलसुतोरस्थलनिक्षिप्तयक्षकर्दमेसानंदपतितभ्रमरमालोक्य मदनदहनशुष्यत्कांतकांताकुचांतर्हृदिमलयज
पंकेगाढबद्धाखिलांघ्रिः उपरिविततपक्षोलक्ष्यतेलिर्निमग्नः शरइवकुसुमेषोरेषपुंखावशेषः १७ मेनेएतदधिकंब्रह्म-

सुखंनास्तीतिभावः १५ भातीतिछद्मनामिषेणस्वीकृतनिद्राभातिस्मस्तनयोरुपरिस्थापितंपाणिपद्मंययासा उत्प्रेक्षते किंकुर्वतीवचित्तस्थि-
तश्चासौरामचंद्रश्चतंनिर्गमशंकयाहृदयान्मानिर्गच्छत्वितिभयेनरुंधतीव १६ मदनेति कामाग्निनाशुष्यन्तयोरमणीयः रामस्यसीतायाः
कुचांतः स्तनमध्यदेशस्तत्रस्थेहृदियोमलयजपंकस्तस्मिन्निमग्नोऽलिर्भ्रमरोलक्ष्यतेउत्प्रेक्षतेकीदृशः गाढंयथास्यात्तथाबद्धाअखिला

अंभयोयस्य अत एव उपरिविततौपक्षौयस्य उड्डीनासंभवात् कइवलक्ष्यते एषकुसुमेषोः शरइव पुंखमात्रावशिष्टः अन्यतोहृदये मग्नइति १७
द्राक् ईषद्व्याजेन भावाविष्करणदंभेनाश्रितानिद्रायया सा अन्यथा वै जात समायाति जानकीपतिं प्रमदयति प्रकर्षेणहर्षयति हर्षप्रकारमेवाह मंदं
यथास्यात्तथा पृथुलंमांसलंजघनंतस्ययोभारः तंदोलयंती तोलयंती पुनः कीदृशी मृदूनि स्पर्शार्हाणि चंचलानि अलकाग्राणि यस्याः प्रकटितं
भुजमूलंयया दर्शितास्तन्यलीलास्तनयोः परिसरशोभाययाएतत्सद्योन्कुंचितास्यंशयनंदर्शितंतदुक्तं कामावतारे प्रमीलादंभतोयत्रप्रीति

तत्रावसरे पृथुलजघनभारंमंदमांदोलयंती मृदुचलदलकाग्राप्रस्फुरत्कर्णपूरा प्रकटितभुजमूलादर्शितस्तन्य
लीलाप्रमदयतिपतिंद्राक्जानकीव्याजनिद्रा १८ तामपिदूरस्थांमन्वानः तदनुजनकपुत्रीवक्त्रमालोक्यरामःपु
नरपिपुनरेवाघ्रायचुंबन्नतृप्तः स्तननटभुजमूलोरस्थलरोमराजिमदनसदनमासीच्चुंबितंपंचबाणः १९ श्रीराम
पादाः निद्रालुस्त्रीनिनवांबरहरणरणन्मेखलारावधावत्कंदर्परिब्धबाणव्यतिकरतरलाःकामिनोयामिनीषु ता
टंकोपांतकांतग्रथितमणिगणोद्यच्छदच्छप्रभाभिर्व्यक्ताःगास्तुंगकंपाजघनगिरिदरीमाश्रयंतेश्रयंते २०

दानदिदृक्षया स्वशोभादीयनेनेत्रेशयनंतद्विकुंचितम् १८ तदनुव्याजाविष्कृतभावदर्शनानंतरं रामः जनकपुत्रीवक्त्रंआलोक्यपुनःपुनः
आघ्रायचुंबन्नपितृप्तोनजातः स्तननटभुजमूलोरस्थलंरोमराजिमदनसदनंचापिरामेणचुंबितंआसीदिति अत्र द्वंद्वैक्यं कीदृशः पंचबाणः
कोमोस्यास्तीतिनथा सकामइति अर्शादिभ्योऽच् एतेनपंचशराख्यंचुंबनंद्योतितम् तदुक्तंवात्स्यायनीये भुजमूलौस्तनौवक्षोवलिंम
दनसद्मच पद्मिनीचुंबिताद्रावंयातिपंचशराभिधम् १९ अथभयलोलालिंगनंद्योतयितुंपद्यमवतारयति निद्रेति तेप्रसिद्धाः सका
माः श्रीरामपादाः जघनमेवगिरिदरीसैवाश्रयंनिलयस्थानंश्रयंते आश्रयंते इतिकुत इत्यपेक्षायामाह निद्राजातायस्याः एवंभूता-

स्त्री सीतातस्यानितंबवस्त्राकर्षणेसतिरभसंतीशब्दितायामेरवलातस्याः रावेणधावन् योकंदर्पः तेनारब्धः संधितोयोबाणस्तेनयोव्यतिक
रोभयंतेननरलाःआत्मानंगोपायितुंचंचलाःअन्योपिचौर्यंकुर्वन् केनापिज्ञातोअलंपलायितुं आत्मानंगोपायतितथैतेपिकामाचौर्ये अ
न्यस्मिन् अन्यावभासोव्यतिकरः अत्रनिर्भयत्वेनभयंतर्हिनिलीयतिष्ठंतुइतिचेत्तत्राह ताटंकयोरुपांतेषुग्रथिताःयेमणिगणारत्नसमूहा
स्तेभ्यउन्नच्छंतोयाःउज्वलाःप्रभादीप्तयस्ताभिर्व्यक्तांगाःप्रकटीकृतशरीराः अतएवज्ञातेषुसत्सु तुंगकंपोयेषांते एवंभूताःसंतःआश्रयंते
उक्तंचकामावतारे निर्निद्रितामृगदृशोरसनांयदेवसंमोचनायविभयीकृतमानसोऽलं तद्भावकंपसुखतोजघनेनिलीयमास्थायतिष्ठति
तदाभयलोलसुक्ष्ममिति २० स्पृहेति भावंमानसंरागंअन्यत्स्पष्टमेवप्रेमतःसंगंस्पृहयतिबालभावाद्बिभेतिइतियोज्यम् २१ अत्यंतंका

जानकीप्रबुद्धा स्पृहयतिचबिभेतिप्रेमतोबालभावान्मिलतिस्फुरतसंगेध्वंगमाकुंचयंती अहहनहिनहीतिव्या
जमप्यालपंतीस्मितमधुरकटाक्षैर्भावमाविष्करोति २१ निधुवनघनकेलिग्लानिभावंभजंत्यारमणरभसशंकातं
किंचेतःप्रियायाः अधरदशनसर्पत्सीत्कृतायाधृतायाःपिबपिबरसनांमेकामतोनिर्विशंकं २२ मबाणाभिन्नासतीवीत

लज्जाजानकी निधुनेति हेरमणस्वसुखानुसारंनिर्विशंकंयथास्यात्तथामेरसनांपिबपिबआदरेवीप्साअत्रास्वादनमेवपानं ननुरमित्वा
यास्यामीतिचेत्तत्राह प्रियायाःममचेतः रभसस्य शंकातंकि रभसोरताधिक्यं ततोयाशंकाभयंतेनातंकःकंपोयस्मिन्तत् एवंभूतंजातंरम
णायाक्षमास्मीतिभावः यद्वासर्वमेकंपदंरमणस्यतवयोरभसोरताधिक्यंतस्माद्याशंकातयायःआतंकस्तद्युक्तंचेतःतदेवप्रियंयस्याः
मेकुतोनक्षमासीत्यपेक्षायामाह निधुवनेरतौघनायाबह्वीकेलिस्तयाद्रावणादिनाग्लानिभावंनिःप्राणतांभजंत्याः उक्तंचरसोदधौ अंत
श्वंद्रंदेहेयत्रबलंपुष्टिकृद्भवेदस्याः तद्विगमाद्गत्याधिश्रनैर्निःप्राणताग्लानिः पुनःकीदृश्याःअधरस्यदशनंखंडनंतेनसर्पत्निर्गच्छत्

सीत्कृतं सीत्काररवो यस्याः यद्वा अधरदशनयोः अधरदंतयोरेव सर्पत् सीत्कृतं यस्याः उक्तं च पंचसायके द्रवन्ति च यदि नारी प्रौढरागाग्नि
युक्ता मृदु निधुवनयोगे दंतसंधौ गभीरं द्रवति रदनवासः किंचिदुन्मथ्य भूयः कथितमिह मुनीन्द्रैः सीत्कृतं रागकारि अस्मिन्पद्ये सीत्कृतसा
विष्कृतं पुनः धृतायाः अंके वश्यं प्रेष्ठं पनायिका तदुक्तं रसोदधौ सीत्कृत संज्ञाभिमुखो यस्याः सततं प्रियो भवेदनुगः वश्यप्रेष्ठा सोक्ता व्रज
रमणीमंडनं यथा राधेति २२ वाचामिति रामराज्ञी चरस्थावरां स्थास्नुचरिष्णुरूपां धरित्रीं स्फुरभयति स्फुरभीकरोति केन वाचंगुंफेन रच
नया संदर्भो रचना गुंफ इत्यमरः कीदृशेन गुंफेन रंभायाः अप्सरसस्तस्याः करावेव कमले तयोर्यानि दलान्यंगुलयः तासां यः उदारः संप्र-

वाचांगुंफेन रंभाकरकमलदलोदारसंचारचंचत्तंत्रीसंजातमंजुस्वरसरसतरोद्धारताराक्षरेण प्रत्यग्रोन्मिद्रनाक
द्रुमकुसुमनवामोदसंवादमैत्रीपात्रीभूतेन धात्रीं स्फुरभयति चरस्थावरां रामराज्ञी २३ अथ रामस्तामाल्हादयति
अरण्यं सारंगैर्गिरिकुहरगर्भाश्च हरिभिर्दिशो दिङ्मातंगैः श्रितमथ वनं पंकजवनैः प्रियाचक्षुर्मध्यस्तनवदनसौं
दर्यविजितैः सतां माने म्लाने मरणमथवा दूरसरणम् २४

मार्दवात् संचारस्तद्वा गव्यंजकं तंत्रीगमनं तेन चंचंती सशब्दा या तंत्री
वीणा ततः संजातो यो मंजुस्वरः कोमलालापः ततोपि सरसतरो निश्चयेन रसवान् यः उद्धारः उद्धाराख्यं गीतं तस्मिन् ताराणि व्यक्तान्यक्षराणि
यस्मिन् तत् तदुक्तं संगीते सालगी पंचम श्रीकण्ठी ति मंठविराजितं त्रिपदं सध्रुवं गीतं सुद्धाराख्यं मतं बुधैरिति प्रत्यग्रं नवीनं उन्मिद्रं
विकसितं च तत् नाकद्रुमकुसुमं पारिजातपुष्पं तस्य यो नवामोदः तात्कालिको गंधः स एव वयास्संवादमैत्री वचनचातुरी तस्याः पात्रीभूतेन पा
रिजातकुसुमादप्यतिसुगंधेनेत्यर्थः २३ अरण्यमिति सारंगैर्मृगैर्हरिभिः सिंहैः मातंगैः गजैः पंकजवनैः पद्मव्रातैः वनं जलं जीवनं भुव
नं वनमित्यमरः कीदृशैः सर्वैः प्रियायास्तव चक्षुः सौंदर्येण मृगाः मध्यप्रदेशसौंदर्येण गजकुंभौ वदनसौंदर्येण कमलवनं विजितमिति

मृगादिभिररण्यादिश्रयणंयुक्तमित्याहसतांसभाविनानांमानेचितोन्नतौम्लानेसतिकेनापिदूषितेसतिमरणंसुखंतदभावेदूरसरणंदे
शांतरदुर्गाश्रयणंयोग्यंअतएभिर्दुर्गमेवाश्रितमितिभावः अयिप्रियेअयीतिकोमलामंत्रणेअपिवातत्रसंभावनागर्हासमुच्चयप्रश्न
शंकासंभावनास्वपीत्यमरः २४ वक्रमिति सरसीरुहाणि पद्मानि एणीदृशस्तेवक्त्रंविलोक्यतत्सौंदर्यार्थंवनांतेजलमध्येजपायइष्टा
राधनायभृंगश्रेण्येवाक्षमाला तांजगृहुः एणीदृशइतिपदेनमृग्योपिवनांतेअरण्यमध्येतृणादिभक्षणादिनानेत्रशोभाप्राप्त्यर्थंतन्

वक्त्रंवनांतेसरसीरुहाणिभृंगाक्षमालांजगृहुर्जपाय एणीदृशस्तेष्यवलोक्यवेणीमंगंभुजंगाधिपतिर्जुगोप
२५ स्वर्णंस्ववर्णंदहनेस्वदेहंचिक्षेपकांतिंतवदंतपंक्तिं विलोक्यपूर्णंमणिबीजपूर्णंफलंविदीर्णंननुदाडिमस्य २६
वदनममृतरश्मिंपश्यकांतेतवोर्व्यामनिलतुलनदंडेनास्यवार्द्धौविधाता स्थितमतुलयदिंदुःखेचरोभूल्लघुत्वात्क्षिप
न्निवपरिपूर्त्यैतस्यताराःकिमेताः २७

स्यंतीत्यर्थः भुजंगाधिपतिरपितेवेणीमवलोक्यतत्सादृश्यहीनमंगंजुगोप अन्यथास्वशरीर
गोपनेनकोलाभइतियद्वाएणीदृशःपदद्वयंएणीमृगीजात्यैकवचनंतेदृशःदृष्टीरवलोकनवैदग्ध्यानेकत्वाद्बहुवचनंअवलोक्यवनांतेअरण्यदु
र्गेनेत्ररूपंअंगंजुगोपतन्नेत्रसादृश्यभाववैलक्ष्यत्वात् २५ स्वर्णमितिसुष्ठुवर्णोयस्यएवंभूतमपिस्वर्णंतवकांतिंविलोक्यात्मगतमलाकर्षणाय
त्वदंगस्यसाम्यत्वकथनायचस्वदेहंदहनेचिक्षेपनतुतद्वर्णप्राप्तवदितिभावः हीरकमणितुल्यबीजपूर्णमपिदाडिमस्यफलंतवदंतपंक्तिंविलो
क्यतूर्णमेवविदीर्णंस्फुटितं तदुपमानवबहिःकृतत्वादितिभावः २६ वदनमिति हेकांतेप्रियेपश्यसुखगौरवप्रत्यक्षमवलोक्यविधाताउर्व्यां
भूमौस्थितंतववदनंवार्द्धौक्षीरसमुद्रेस्थितशीतरश्मिंगुणसाम्यातिरेकज्ञापनायअनिलएवतुलादंडस्तेनातुलयत्तोलयामास तदेंदुःल
घुत्वात्अल्पगुणाश्रितत्वात्खेचरउन्नतोभूत् तदास्यचंद्रस्यपूर्त्यैयास्ताराः अश्विन्याद्याःक्षिपतिस्म तस्यचंद्रस्यपूर्त्यैएतास्ताराःकिंकिंयं

संनकियंत इत्यर्थः गुणगौरवात्तववदनमत्रैवास्थितं चंद्रस्तुगुणाभावादूर्ध्वंगतइति भावः २७ ननु सिताखंडश्चेदल्पतरःगुडोबहुत
रःतर्हि किंगौरवादेवगुणाधिक्यमित्यपेक्षायामाह रमणेति भावयित्वानिषेव्यधात्रागुरुकृतमपिमेवदनंतथापिप्रियेणात्वयाआस्वा
द्यअमृतरश्मेरपिमंडलंवानिर्णीयतांयत्रैवस्वाद्यातिशयस्तत्रैवगौरवमितिभावः२८ सीतामितिमनोहरतरांगिरमुद्गिरंतींसीतां
परिपूर्णःकामःकामकलाविलासोयत्रअन्यथेश्वरत्वस्यक्षतिःस्यात् रामःसीतांतथाबुभुजे यथाकोपीश्वरोभूत्वानाद्यभुनक्ति
नपुराबुभुजेनाग्रेभोक्ष्यतीति २९अथैतद्वर्णनमुपसंहरति मृद्विति प्रियायाःकापिअनिर्वचनीयादिव्याअलौकिकीस्तनश्रीराघवस्य

जानकिसानंदंसोत्कंठाचप्राणवल्लभमाल्हादयति रमणचरणयुग्मंतावकंभावयित्वामधुरगिरमुदारांरामदासीब्रवीमी
कृतमपिगुरुधात्रास्वाद्यनिर्णीयतांमेवदनममृतरश्मेर्मंडलंवाप्रियेण २८ रामःसानंदम् सीतांमनोहरतरांगिर-
मुद्गिरंतीमालिंग्यतत्रबुभुजेपरिपूर्णकामः रामस्तथात्रिभुवनेपियथानकोपिरामांभुनक्तिबुभुजेनचभोक्ष्यतीशः
२९ मृदुसुरभिसुवर्णस्फीतकक्षापुटोद्यल्लुलितभुजलतायाःसंपुटालिंगितायाःसुरतरसवशायाराघवस्यप्रियाया
हरतिहृदयतापंकापिदिव्यास्तनश्रीः ३० हृदयतापंहृत् अयतीतिहृदयःकामस्तस्यतापंव्यथांहरतीतिकीदृशीमृदुःस्पर्शासहः
सुरभिःसुगंधःसुवर्णोगौरोज्वलःस्फीतः किंचिदुन्नतःसचासौकक्षापुटश्चतस्माद्उद्यंतेललितेभुजलतेयस्याःसातथाएवंभूतात्कक्षापुटादुद्यते
उपरिभुजमूलेयस्याःहरतुइतिपाठः तत्राशीःकिंपुनःकीदृश्याःसपुटालिंगितायाःसंपुटाख्यालिंगनेनालिंगितायाःउक्तंपंचसायके ऊर्ध्वं
गतेमध्यगतेयुवत्याःपार्श्वस्थितायाःपरिरभ्यदेहम् पुनःस्त्रियोलोलननीरतज्ञैरुत्कृष्टवःसंपुटनामधेयः अयमेवोदयनेनान्यथोक्तः
उत्तानसुसम्प्रमदोपरिस्थःकक्षांसमावर्ज्यनदूरुयुग्मम् संमर्दयानस्तनमंडलंयद्भमेतसःस्यात्किलसंपुटाख्यः २०

आगामीति रंगभवनेस्मरतागारे चिरंकोपिभ्रमः आविरासीत्कयोः तयोः सीतारामयोः भ्रमोपिचिरमव्ययमितिचरकः किंकृत्वे वआ
गामिभविष्योयोदीर्घविरहः दंडकारण्यप्रस्थानरूपस्तंज्ञात्वैव कीदृशीसीताभद्भुताः कामकेलयोयस्याः साअस्यरसस्यादौतुरगांस्ता
उग्यामासेतिभ्रमः उक्तः प्रांतेबिडालपल्लीपूजनमेवभ्रमः अतः आद्यांतभ्रमादिनिष्ठमेवजातं यद्वास्यष्टमेवार्थः रंगभवनेअद्भुतका
मकेलिः कामक्रीडाचिरमाविरासीत् अन्यत् पूर्ववत् अन्यत्कविनैवव्याख्यातंभ्रमभेवाविःकरोतिचरणायुधानामितितयोः जानकी

आगामिदीर्घविरहश्चिरमाविरासीत्तज्ज्ञात्वैवरंगभवनेद्भुतकामकेलिः श्रुत्वातयोर्गिरमपूजयदोतुपल्लीमुद्गीर्णकर्ण
स्मरणांचरणायुधानाम् ३१ इतिश्रीहनुमन्नाटकेद्वितीयोऽकः २ ७ ७ भुक्त्वाभोगान्स्मरंगान्कतिपयसमयं
राघवोधर्मपत्न्यासार्द्धंवद्विष्णुकामः श्रवणमुनिपितुःप्रापहाशापकालम् धत्तेतस्मिन्विवस्वान्मलिनकिरणतांहाम
होत्पातहेतोरुल्कादंडःप्रचंडःप्रपततिनभसःकंपतेभूतधात्री १ रामचंद्रयोर्मध्येजानकीचरणायुधानांगिरंश्रुत्वाबिडालपल्लीं
अपूजयत् अत्रबिडालपल्लीशब्दाद्बिडालपूजनेपतिव्रतायाः परपुरुषस्पर्शोमाभूदितिसूचितं किमित्यपूजयत् एवमुक्तंभवतिबालाया
श्चैतसिचरणायुधशब्देनैवप्रातरुत्पद्यतेनेतरथा अतः पूजिताबिडालपल्लीपूर्ववैरमनुस्मरंतीचरणायुधमव्यग्रमश्नातुतस्मिन्निवृत्ते
प्रातःकालासंभवादनंताभवतुयामिनीकामिनीपतिमालिंग्याजस्रंस्मरसमनुभवत्वित्यभिप्रेतोर्थः ३१ इतिश्रीमिश्रदासविरचितायांह
नुमन्नाटकदीपिकायांजानकीविलासोनामद्वितीयोऽकः २ ७ अथरामवनलीलांवर्णयितुमंकमारभते भुक्त्वेतिराघवोरामः धर्मपत्न्यासा
र्द्धंकतिपयसमयंयथास्यात्तथास्मरंगान् भोगान् कामविलासानष्टौभोगान्भुक्त्वाश्रवणमुनिपितुर्यज्ञदत्ताख्यवैश्यतपस्विनः शापस
मयंप्राप अत्रेयंकथा मृगयांगतोदशरथः वनगजभ्रमेणशब्दवेधित्वपस्विपायघटंभंजलेनपूरयंतंश्रवणमुनिंअदृष्ट्वैवजघानततोस्य

पित्रायत्तदत्तेनशासः अस्यामेवावस्थायांपुत्रशोकात्परलोकंगमिष्यसीतितंवियोगसमयंप्राप यद्वा राघवोएषःदशरथःधर्मपत्न्यासान्द्रंवर्द्धिष्णुका मःअपूर्णकामाभिलाषइतिउभयोर्विशेषणं भोगानष्टैउक्तंच स्रग्गंधिवनितावस्त्रंगीतंतांबूलभोजनम् वाहनंभूषणंचेतिभोगाष्टकमुदीरितम् शापकालमेवद्योतयतितस्मिन्समयेधर्त्तव्यधत्तभूतार्थेवर्तमानता नाटकालंकृतित्वात् उक्तंचदशरूपकेप्रकृतंवर्तमानत्वंनाटकालंकृतिःपरा १ दिगिति अह्नितिदिवैवस्फारोविस्तारः स्वर्भानोः राहोः सकाशात्मध्यान्हेउल्बमस्यकोशोयेषांते श्वगणाः सारमेयगणाः तेषांरुतमभूत् स्फी

दिग्भागोधूसरोभूदहनिबहुतरस्फारताराः स्फुरंतिस्वर्भानोर्भानवीयंग्रहणमसमयेरौधिरीबिंदुवृष्टिः मध्यान्हो
ल्बस्यकोशश्वगणरुतमतिस्फीतं फेरुप्रचारोवारंवारंगभीरःप्रलयइवमहाकालचीत्कारघोरः २ कैकेयीआत्मगतम्
प्राप्तःकिलमद्वाग्बंधकालस्तर्हिद्रुतंराजानंभरतराज्यंप्रार्थयामिनखलुकालक्षेपःश्रेयसेरहसिउपगम्यप्रकाशंराज
न्नमंगलीरियंवधूर्यतो ऽस्याआगमनमात्रेणमहोत्पाताःसंभवंतीति तानुत्पातानवेक्ष्याक्षितिपमथदशास्यंदनंक्रंद
यंतीलोकान्शोकानलौघैःशिवशिवतरसाभस्मसात्कुर्वतीव कैकेयीवाचंसूचेनिखिलनिजकुलांगारमूर्तिःससीतः
शांत्यैपुत्रस्यराज्यंभवतुवनमभिप्रेष्यतामेषरामः ३ तोबहुतरः फेरूणांशिवानांप्रचारः इतस्ततःसरणंवारंवारमभूत्कइव
गभीरःप्रलयइवकीदृशः महाकालोरुद्रस्तस्यचीत्कारेणघोरः प्रलयेरुद्रश्चीत्कारंकरोतीतिप्रसिद्धंस्फीतकेतुप्रचारइतिवापाठेस्पष्टार्थःएको
त्तरशतंकेतवःसंति २ तानिति दशास्यंदनंदशरथंक्रंदयंतीशोषयंती शिवशिवेतिखेदे एषः रामः शांत्यैउत्पातजन्यदोषोपशमायवन
मभिप्रेष्यतांपुत्रस्यममकृतस्यराज्यंभवतु इतिवाचमूचे ३ ⁂ ⁂ ⁂ ⁂ ⁂

( मंगलीशब्दईकारांतःस्रमंगलीरियंवधूरितिमंत्रवर्णादमंगलीरियंवधूःसीता )

राममिति अथवाप्राणधारणाक्षमश्चेत्तान्प्राणानपिविहायअनृतप्रतिनिर्मुक्तः स्यांतदेववचनंअन्यथामाभूत् तदनु इतिविचारानंतरंहा
कष्टंनष्टोतियथात्वंवदसितथैवास्तुइतितांकैकेयींबभाषे अत्रराज्ञेतिचिंतितंचेत्कैकेय्युक्तंकरोमितर्हिरामादर्शनेनमरणमाप्नुयांनचेदनृतं
स्यात्तर्ह्यनृतंमास्यात्मरणमेवास्तुइतिभावः अत्रेयंकथा देवासुरयुद्धेदेवपक्षेस्थितोराजामूर्च्छितः तेनैवसहेयंतत्रगताकैकेयीरात्रावे
नंभक्षयन्घोरराक्षसेभ्योयोगबलेनारक्षत् तदाप्रबुद्धेनराज्ञावरद्वयमस्यैदत्तंतत्तयाराज्ञिविन्यस्तंयथेच्छंगृहीष्यामीतितद्वरादानादनृ

गद्यं दशरथः सकरुणंस्त्रीवचनस्वीकरणंमरणोत्साहंचनाटयन्महतींमूर्च्छामासाद्यधरणीतलमुपगतः कथमपि
चेतनामुपलभ्य रामंकामाग्रजमिववनंप्रस्थितंविक्ष्यशक्तोधर्तुंप्राणांश्छिवशिवकथंतान्विहायाथवाहम् निर्मु
क्तः स्यांवचनमनृतंतत्पुननान्यथामेभूयाद्भूयस्तदनुवचनंहाबभाषेतथेति ४ गद्यं रामभरतौस्वस्वंकालमधि
गम्यहर्षशोकौनाटयंतौगुरोर्गिरिराजटावल्कलेच्छत्रचामरधारिणौवनप्रस्थानराज्याभिषेकारंभायराजानंदशरथं
नमस्कर्तुमवनरतः तत्रभरतः ह्रातातमातरहहूज्वलितानलेमांकामंदहत्वशनिर्शैलरूपाणबाणाः मर्माणितुतान्वि
षहतेभरतः सलीलंहारामचंद्रपदयोर्नपुनर्वियोगं ५ नः स्यामितिप्रसिद्धम् ४ रामभरताविति अत्रप्रसिद्धशब्दार्थकथनेरा
मायणविरोधः स्यात् अस्याप्यग्रिमश्लोकैश्चततएवंव्याख्यायते अत्रराज्ञोक्तंराज्यप्रष्टोरामोवनंयातुअराज्यार्होभरतोराज्यंगृण्हातु
तदाभरतोपिराज्यंपरित्यज्यरामानुगमनायोद्यतोभूदितिपठ्यते अन्यथाभरताधर्मः स्यात् रामभरतौराजानंन
मस्कर्तुमवनरतइत्यन्वयः कीदृशौस्वंस्वंसमयंवनगमनंराज्यग्रहणरूपमधिगम्यहर्षशोकौवनगमनात्रामोहर्षंराज्यश्रवणात्
भरतः शोकंनाटयंतौनाटकमेवाह गुरोर्दशरथस्यगिराजटाश्चवल्कलानिचतान्येवच्छत्रचामराणिचतद्धारिणौकस्मैवनप्रस्थानमे

वराज्याभिषेकः तस्मैएतदर्थेननृपेसत्यत्वमायातिभरतेपिधार्मिकत्वंनृपेणरामेभरतेपिराज्यंप्रतिज्ञातंएकतरादानेनृतमेवतस्मादुभाभ्यां
वनमेवराज्यंमनंभरतोजटाधरःसन्रामाज्ञयाराज्यंचकरोतिकैकेय्यापिवरदानात्सत्यत्वमेव ४ तत्रभरतः अशनिर्वज्रंशैलाःगिरयःकृपाणः
खड्गःबाणःशरः तैश्चनेतानिवज्रादीनिस्कगमं ५ भरतस्यराज्यारुचिश्चराज्याकरणंकीदृशस्यभरतस्यजनकेदशरथेबांधवेमयिवत्सल
स्यप्रेमवतः यद्वाजनकोविदेहस्तद्वांधवस्यतद्भ्रातुःप्रेष्टस्यजामातृत्वात्ममानुजस्येति अन्यत्स्कगमम् ६ श्रुत्वेति नृपेणदशर-

मांबाधतेनक्षितियागहनेषुवासोराज्यारुचिर्जनकबांधववत्सलस्य रामानुजस्यभरतस्ययथाप्रियायाःपादार
विंदगमनक्षतिरुत्पलाक्ष्याः ६ श्रुत्वास्कमंत्रवचनेनस्कृतप्रमाणंशापस्यतस्यचविचिंत्यविपाकवेलाम् हाराघवे
तिसकृदुच्चरितंनृपेणनिःश्वस्यदीर्घनरमुच्छ्वसितंनभूयः ७ मातस्तातःक्वयातःस्कुरपतिभवनंहाकुतःपुत्रशोका
त्कोसोपुत्रश्चतुर्णात्वमवरजतयायस्यजातःकिमस्य प्राप्तोसौकाननांतंकिमितिनृपगिराकिंतथासौबभाषेम
द्वाग्बद्धःफलंतेकिमिहतववधःराधीशताहाहतोऽस्मि ८ रामःलक्ष्मणत्वमपियाहिमंदिरंजानकीचविधिनेवया
पिता दुष्कृतीनयतुवन्यवृत्तिनारामएषपुरुषायुषंचिरं ९ क्षेपकः

थेनस्कमंत्रोमंत्रीतद्वचनेनस्कृतानांरामलक्ष्मणभ
रतादीनांहाराघवरामरामइतिएकवारमुच्चरितेसतिदीर्घतरंनिश्वस्यभूयोनोच्छ्वसितंदेहंत्यक्तमितिभावः ७ भरतःमहतींमूर्च्छा
मासाद्यवैकृव्यंनाटयति मातरितिउक्तिमत्स्त्यार्थोद्घाटनंअन्यत् स्कगमंइतिपुनःमूर्च्छितोभुविपपात ८ ९ गुरोरिति शरयुक्तश्चा
पोहस्तेयस्यमध्यमपदलोपीसमासः अन्यार्थेऽथशब्दःसकः लक्ष्मणस्तंराघवंअनुजगामबालवत्सोगामिवेति १० गुर्वाज्ञे
ति गुरोर्दशरथस्यअहमपियास्यामीतिपृच्छतिकोसलकन्याकौशल्यातदंघ्रियुगलम् शुकंचसारिकांचपिककुलंचद्वंद्वैक्यम् ११

रामइति अयोध्यानिकटएवनंदिग्रामोस्तितत्रस्थःसन्ननुजटाजिनादिवतःकिमयोध्यापालनेनेति तत्राहरघुपतेःरामस्यवनवासानंत
रभोगायअपालनेरामवचनभंगात्त्वमत्रस्थोराज्यंकुर्विति रामवचनं १२ सद्यइति त्रिचतुरेतिनिपातःअसकृद्वारंवारंपर्यंतभूःपरि
सरइत्यमरः १३ आदाविति हेवैदेहि इमान्वनसंबंधिनोभूभागान्भूप्रदेशान्त्वंकथंयायाःकथंगमिष्यसिस्रोतांसिचकानना निचग-

गुरोर्गिराराज्यमपास्यतूर्णंवनंजगामाथरघुप्रवीरः निषंगपृष्ठःशरचापहस्तस्तंलक्ष्मणोगामिवबालवत्सः १० गुर्वा
गुर्वाज्ञापरिपालनायवनंसंप्रस्थितंराघवंदृष्ट्वासौत्वरिताविदेहतनयाश्वश्रूजनंपृच्छति नत्वाकौसलकन्यकां
प्रियसुहृत्पश्चात्स्फुमित्रांपुनर्दृष्ट्वाहाशुकसारिकापिककुलंरामानुगाप्रस्थिता ११ रामेप्राप्तेवनांतंकथमपिभरत
श्चेननंप्राप्यतातंनीत्वादेवेंद्रलोकंसुनिजनवचनादूर्ध्वदेहक्रियाभिः भ्रातुःशोकाज्जटावानजिनवृततनुःपाल
यामासनंदिग्रामेतिष्ठन्नयोध्यांरघुपतिपुनरागामिभोगायवीरः १२ सद्यःपुरीपरिसरेषुशिरीषमृद्वीगत्वाजवा
त्रिचतुराणिपदानिसीता गंतव्यमस्तिकियदित्यसकृद्ब्रुवाणारामाश्रुणःकृतवतीप्रथमावतारम् १३ रामः
आदावेववृकोदरीकुचतटीभारेणनम्राप्युनर्लीलाचंक्रमणंचनैवसहसेदोलाविधौश्राम्यसि स्रोतःकाननगर्त
निर्झरसरित्प्रायानपूर्वानिमान्भूभागानपिभूतभैरवमृगान्वैदेहियायाःकथम् १४ ॥ ॥

र्ताश्चनिर्झराश्चसरितश्चएषांप्रायोबाहुल्यंयेषुतान् अपूर्वान्त्वयाकदाप्यदृष्टान्यास्यामीतिचेत्तत्राह लीलायेत्यन्मंदेपि
चंक्रमणंइतस्ततःसंचरणंतदपित्वंनसहसे दोलाविधौअपिश्राम्यसिश्रममेषि अत्रहेतुमाह आदाविति १४ रामः
वारितामपिकुनमप्रभाषांसीतांदृष्ट्वाधरणींप्रार्थयते अरुणेति भोअवनिभूमेइयंसीताअकस्मान्मंदंमंदंयथास्यात्तथाकठि

नानतुर्यस्याएवंभूतायाधरण्याः सकाशात्स्खलंतीसती यातिकुतइत्यपेक्षायामाह अरुणदलाचेयंनलिनीचनदूनुआसमंतात्
स्निग्धेपादारविंदेयस्याः साभतोस्याः पादविन्यासदेशेनिजकठिनत्वंत्यजकस्मात्स्वन्यामीतिचेत्तत्राह तवकृतनाएतेनवात्सल्यमुदी
रितम् जानकीवनंयानियद्वाकीदृश्याध रण्याः अरुणदलनलिन्याअरुणायेदलाः पादांगुलयस्तेषांनलिनीदुःखदेत्यर्थः नलो
स्त्रीनालदुःखयोरितिचरकः नलंदुःखमस्याअस्तीतिनलिनीमैथिली १५ पथिकवधूभिः पांथस्त्रिभिःयद्वा पथिपथिमार्गेमार्गे

अरुणदलनलिन्यास्निग्धपादारविंदाकठिनतनुधरण्यांयात्यकस्मात्स्खलंती अवनितवस्कृतेयंपा-
दविन्यासदेशेत्यजनिजंकठिनत्वंजानकीयात्यरण्यम् १५ पथिपथिकवधूभिःसादरंपृच्छमानाकु
वलयदलनीलःकोयमार्यनवेति स्मितविकसितगंडंव्रीडविभ्रांतनेत्रंमुखमवनमयंतीस्पष्टमाचष्टसी
ता १६ घुसृणमसृणपादागम्यतेभूःसदर्भाविरचयशिवजातंमूर्ध्निघर्मःकठोरः इतिहृजनकपुत्री
लोचनैरश्रुगर्भैःपथिपथिकवधूभिर्वीक्षिताशिक्षिताच्च १७ ५ ५ ५

कवधूभिःग्रामीणास्त्रीभिः कोस्त्रीग्राम्यप्रकाशयोरितिधनंजयः स्मितेनविकसितोगंडोयस्मिन्नून्मुखमवनमयंतीएतेनस्प
ष्टमद्रमणोयमित्युक्तवतीनतुगिरेति १६ घुसृणेति पथिमार्गेपथिकवधूभिः अश्रुगर्भैर्लोचनैः कृत्वाजानकीवीक्षिताइति
शिक्षिताचइतिकिंभोसीतेत्वंघुसृणमसृणपादाकमलकोशनवनीततुल्यारुणकोमलचरणासिभूःसदर्भादर्भांकुरसहिताभवत्या
गम्यते मूर्ध्निघर्मःकठोरःअतः शिवजातंशिरःपादत्राणंवल्कलजंपत्रजंवाविरचयेति १७ ५ ५

मूर्ध्नेति पयःप्रस्रवैःनिर्झररूपैः एषःशैलेंद्रोपिचित्रकूटोपिसास्रुरभूत्केनयेनरुदितेनकीदृशःशैलेंद्रःउद्विग्नाःयेविहंगाःपक्षिणःतैःनि
र्गताःपरिसक्तास्तरवोयस्मिन् निःसंमदाःहर्षरहिताःश्वापदाःमृगादयोयस्मिन्सः प्रमोदामोदसंमदाइत्यमरः १८ राममिति यथा
त्वमितिरामस्ययथात्वंस्यात्तथैवगच्छानुसरेत्यर्थः १९ अथभरतेनिवृत्तेरामेप्यन्यतःकृतप्रयाणेपदेनि विशीर्णाःसर्वतः
प्रक्षिप्ताग्रावाणोयस्मिन्सचासौविंध्याद्रिपादश्चतस्मिन्त्वयिचरतिसतिकतिकतितापसादारवंतः भवितारइति एतत्कुतइ

तत्रचित्रकूटेजानकीसकरुणंसबाष्पम् मूर्ध्नाबद्धजटेनवल्कलभृतादेहेनपादानतिंकुर्वाणेभरतेततथाप्ररुदि
तंतारस्वरैःसौत्या येनोद्विग्नविहंगनिर्गततरुर्निःसंमदश्वापदःशैलेंद्रोपिकिलेषभूरिभिरभूत्सास्रुःपयः
प्रस्रवैः १८ तत्रैवस्फामित्रालक्ष्मणंप्रति रामंदशरथंविद्धिमांविद्धिजनकात्मजां अयोध्यामटवींविद्धिगच्छपु
त्रयथासुखम् १९ अथाहस्मजानकीरामंप्रति पदकमलरजोभिर्मुक्तपाषाणदेहामलभतयदहल्यांगौतमो
धर्मपत्नीम् त्वयिचरतिविशीर्णग्रावविंध्याद्रिपादेकतिकतिभवितारस्तापसादारवंतः २० वैदेहीअदृष्टराजमं
दिराद्बहिर्व्यवहारतयाबाल्यभावाच्चदैवयोगात्नौकासुखमनुभूयवनेचरंतीस्थलेपि भाराक्रांतासतिनौभ्रमचरती
तिमन्यमानास्माभिरतः परमनयैवसुखप्रयाणंकर्तव्यंनतुपद्भ्यामितिबुध्यानावमधिकृत्सराममब्रवीत्

सपेक्षायामाह यतःगौतमःशापाच्छिलारूपांअहल्यांतवपदकमलरजोभिर्मुक्तःत्यक्तःपाषाणदेहोययातामलभतइत्युक्तंभवति त्व
च्चरणस्पर्शेनयथापूर्वमहल्यापाषाणरूपापिदेवीत्वंगनातथाद्यापिविंध्यग्रावणास्त्रियोभविष्यंतीतिपूर्ववृत्तमनुस्मृत्योक्तं वैदेहीति
वनेजले स्थलेभूमौ उपलेतियदीत्यर्थेवाशब्दःइयमपिपोतपुत्रीनौकाचेत्केनापिशापिताकापिमुनिपत्नीस्यात् तर्हिनोस्मा

कमेवश्रीमतीभवतुसुखकारिणीस्यात्तुमुनिपत्नीमाभूदितिभावः केवगौतमस्यशापात्तुउपलतनुः पाषाणदेहापितेचरणनलि-
नसंगानुग्रहंभजंतीसतीअहल्येवयथाशिलात्वंहित्वाअहल्यात्वंयातातथेयंनौकापिमुनिस्त्रीत्वंमायातु अस्मदारोहणसुखवाभा
वात् इत्युक्तवत्यांसीतायाम् २१ दृष्ट्वेति वनेषुदंडकसंज्ञकेषु २२ एषेति हेरघूत्तमएषापंचवटीकुटीभवत्वितिशेषः कीदृशीपंचव
टी पंचवटयुक्ता एतेनातिनिबिडच्छायात्वमुक्तम् पुनःकीदृशी यत्रपंचावटीअस्तिपंचानामवटानासमाहारःपंचावटी पंचवटवृक्षमू-
लेषुपंचसरस्वतींगर्तीः गर्तावटौप्रत्यश्वकूपइत्यमरः पुनःकीदृशी पांथस्यप्रवासिनः एकमपेक्षितंजलच्छायादिकंघटयतेउद्दीप
यतीति पुनःकीदृशी पुरस्कृतोशोभमानोनटोकुड्यापेक्षयाद्वारभागोयस्याःसा पुनःकीदृशी संश्लेषोदारपत्याभिनिवेशस्तस्य-

उपलतनुरहल्यागौतमस्यैवशापादियमपिमुनिपत्नीशापितांकापिवास्यात् चरणनलिनसंगानुग्रहंतेभजंतीभ-
वतुनिरभियूनःश्रीमतीपोतपुत्री २१ दृष्ट्वातिदैन्यंजनकात्मजायास्तत्रैवरामःसहलक्ष्मणेन गोदावरीतीरसमाश्रि
तेषुवनेषुचक्रेनिजपर्णशालाम् २२

भित्तोसंचयेवटीनन्निर्वर्तकौषधवाटिका पुनःकीदृशी यत्रयत्समीपेगोदागोदा-
वरीनर्तनर्तकीरूपा कीदृशीगोदा तरंगिणीनटोयस्याःसा पुनःकीदृशीगोदा कल्लोलैश्चचंनःपुटाःजलनिर्गममार्गायस्यांसाकल्लो
लचंचत्पुटी पुनःकीदृशीगोदा अलौकिकोयःपद्मामोदः तस्यकुटीकूपिका पुनःकीदृशी भवाब्धिशकटीपोतरूपा पुनःकीदृशी
गोदा भूतक्रियादुःकटी भूतानांक्रियाभिःसामान्यधर्मैःदुःप्रापाबहुपुण्यलभ्येत्यर्थःअत्रविशेषणेषुवटीनटीकुटीसादृश्यंचित्यम्
विस्तारभयान्नविहृतमु अत्रभवाब्धिशब्दबलादन्योप्यर्थःसंभवति हेरघूत्तमएषाकुटीभवतु कीदृशीपंचानांपृथिव्यप्तेजोवा
य्वाकाशादीनांवटीनिहर्त्रीवटविशाततेयांप्राप्यनपुनर्भवइतियत्रयस्यांपंचानांरूपरसगंधस्पर्शशब्दानां अवटीसंगतानिवर्तो

कोविधिरस्तिवटवर्जने अत्रेंद्रियाणिस्वजयानीतिपांथस्यमोक्षमार्गेकृतप्रयाणस्य एकानिरूपमायटीविश्रामस्थानं घटविश्रम
णे यत्रयस्यांगोदा गावोवेदवाचः ताःददातीतिगोदा मुनिसभानदीप्रसिद्धास्तेनटआविर्भावे कीदृशीगोदापुरस्कृतातटी समि
त्कुशसमृद्धिर्ययासा तटत्नसमृद्धो पुनःकीदृशी संश्लेषोदारापत्याद्यभिनिवेशस्तस्याभित्तौसंचयेवटीवज्ररूपा वज्रंवटीपविःसा
रइतिशाश्वतः पुनःकीदृशी तरंगादिषुप्राप्तायेजीवाः तेषांतटिनीनिःसारणतीर्थवती पुनःकीदृशी कल्लोलैर्दैवैरितस्ततःचंक्रम्यमा
णानिनिकुंजानियस्याःसाकल्लोलोदेववारिणो रितिधरणिः निकुंजपुटयोःपुटइतिविश्वः पुनःकीदृशी दिव्योनैसर्गिकोयआमोदः

लक्ष्मणास्तत्कुटीरमणीयतामालोक्य एषापंचवटीरघूत्तमकुटीय त्रास्तिपंचावटीपांथस्यैकघटीपुरस्कृततटी
संश्लेषभित्तोवटी गोदायत्रनटीतरंगिततटीकल्लोलचंचत्पुटी दिव्यामोदकुटीभवाब्धिशकटीभूतक्रियादुष्कटी २३
जानकीसंन्यस्ताध्वपरिश्रमासुरव्यावतारंपुराणपुरुषंवंदेनेस्म क्रीडाकल्पवटंविसर्पितजटंविश्वांबुजन्मावटं-
पिष्टांडौघघटंधृतांघ्रिशकटध्वस्तक्षमासंकटम् वासनातस्यकुटीक्षयकरी निवासक्षयोः कुटीतिचरकः अतएवभवाब्धि
शकटीसंसारतारणनौका नन्वेवंचेत्सर्वैकथंनविद्धरितिचेत्तत्राह भूतानांप्राणिनांक्रियाभिर्दुरदृष्टैः दुःकटीदुःप्रापेत्यर्थः एतेधान
वोकविकल्पद्रुमेचिंत्यास्तद्रूपंच २३ तत्रैवकुटीकरणाज्जातानंदाप्रणमति अहंरामंवंदेइत्यन्वयः कीदृशं क्रीडानांनरसूकरतिर्यगाद्य
वताराणांकल्पवटंअवताराःयतःशक्तिमास्थायक्रीडंतियथेच्छम् ननुप्रतियुगावतारणाजीवःकिंनेत्याह विसर्पितवटंप्रकटीकृत
विश्वनतु ननुविश्वजनकत्वेनतत्कृतदोषवान्किं नेत्याह विश्वांबुजन्मावटंविश्वमेवांबुजन्मकमलंतत्प्रकाशाय आसंमततःवटः
सूर्यःयथासूर्यः पद्मंबोधयतिनतुतद्गंधादिगृण्हातितथेश्वरोपीक्षयेवकरोतिनतुद्वेषभाक् वटःसूर्येतरौलोकइतिशाश्वतः सू-

यंचन्नाशवान् किंनेत्याह पिष्टांडेोयपटंचूर्णीकृतब्रह्मांडसमूहंस्वयमेवनाशकृदित्यर्थः नर्हिसर्वानेव नाशयतिकिंनेत्याह धृ
तांघ्रिशकटं धृतोहृदयेस्वांघ्रियैस्तेधृतांघ्रयोभक्ताः तेषांससारोत्तारणायवात्यंपोतमिति एतदेवदर्शयति ध्वस्तंदूरीकृतंक्षमाफ
कानांअंबरीषादीनांसंकटंयेनतंमध्यमपदलोपीसमासः नर्हिभक्तपालकत्वाद्विषमः किंनेत्याह विद्यदिवचारुरुकयस्यांगदीप्ति
नयाविधूतः कपटंमायाकृतदंभोयेनतं अतोयः कोपितद्रूपंस्मरतितस्यदंभक्षतिः नेतरेषां अतोज्ञानाज्ञानाभ्यांजीवानामेवविष
मत्वंनतुनवेतिभावः ननुएतादृक्कथं प्राप्यते तत्राह सीताधरालंपटंभक्तार्यमाविर्भूतमित्यर्थः ननुतर्हिकामीकिंनेत्याह भिन्ना

विद्यच्चारुरुचाविधूतकपटंसीताधरालंपटंभिन्नारीभघटंविरुग्णशकटंवंदेगिरांदुर्घटम् २४ गद्यम् अथमारीचः
अतीतानागतवर्तमानत्रिकालदर्शनोलंकापतेराज्ञामासाद्यचिंतयामास रामादपिचमर्तव्यंमर्तव्यंरावणादपि
उभयोर्यदिमर्तव्यंवरंरामोनरावणः २५ फललितफलमूलैस्तत्रकालंकियंतंदशरथकुलदीपेसीतयालक्ष्मणेन
गमयतिदशकंठोत्कंठितप्रेरितंद्राक्कनकमयकुरंगंजानकीसंददर्श २६ अरयः कामादयएवइभाः मतंगजास्तेषां
घटा समूहोयेनतम् ननुजितकामादित्वादिरहितेनेहिकारिपुः किंनेत्याह विरुग्णशकटंविशेषेणरुग्णाः खंडीकृताः शकटाः दैत्यराजा
नोयेनशंकोयवनराक्षसाविनिघ्नरणिः टोमहेश्वरआख्यातइत्येकाक्षरः नन्वेवंमांसर्वेकिंनविद्युरितिचेन्नगिरांदुर्घटंवाचामगोचरं अ
निर्वचनीयमित्यर्थः २४ रामादितिवरं रामोनरावणः इत्यस्यायमर्थः रामान्मरणेऽपरत्रमोक्षः स्यादिहचस्वामिकार्यमित्यर्थद्वयमिति
२५ फललितेति इतिविचार्यमृगोभूत्वानत्पर्णशालाभ्यर्णंगतः दशरथकुलदीपेरामेसीतयासहलक्ष्मणेनचसहतत्रकालंगमयतिस
तिजानकीकनकमयकुरंगंसंददर्श कीदृशंदशकंठस्यउत्कंठितेनउत्कंठयासीताहरणाभिलाषेणप्रेरितंप्रस्थापितमिति २६ ७ ७

देहमितिस्फगमम् २७ सांगमिति जानकीतंमायामृगंप्रतिरामंयाचतेस्म प्रार्थयामासेत्यर्थः कीदृशं द्रुतंमृत्फर्यस्यद्रुतनिधनश्चा सौनिशाचारीचसनासौमरीचश्चतं अग्रेधावंतंअनिगहनेक्षणंयथास्यात्तथासंचरनंसोपिरामः लक्ष्मणेनसहतद्वधायक्षिप्रमगा त् लक्ष्मणेनानुगनइत्यध्याहारोवा कीदृशेनतद्रक्षणायसीतासंरक्षणार्थेलिखितधनुः कोट्यानटोद्धारोपांतभागोयस्याःसाभूः

देहंहमममयंहरिन्मणिमयंश्रृंगद्वयंवैद्रुमाश्चत्वारोपिखुरारदच्छदस्फुरंमाणिक्यकांतिद्युति नेत्रेनीलस्फना रकेस्फविततंतद्वज्वलंप्रेक्षितंतत्नद्रलमयंकिमत्रबहुनासर्वांगरम्योमृगः २७ सांगंमायाकुरंगंद्रुतनिधन निशाचारिमारीचमग्रेधावंतंसंचरंतंक्षणमपिगहनेजानकीयाचतेस्म रामंकामाभिरामंनिशितशरधनुर्धारिणंलक्ष्मणेनक्षिप्रंतद्रक्षणायोल्लिखितनटफवासोप्यगात्तद्वधाय २८ इतिश्रीहनुमन्नाटकेतृतीयोंकः ३ ७ आंदोलयन्विशिखमेककरेणसार्द्धंकोदंडकांडमपरेणकरेणधुन्वन् संनत्यपुष्पलतयापटलंजटानांरामोमृगंमृगयतेवनवीथिकासु १ हस्ताभ्याशसुपेतिलेढिचतृणंनेस्पृश्यतांगाहतेगुल्मान्प्राप्यनिवर्ततेकिसलयानाघ्रायचाघ्रायच भूयस्त्रस्यतिपश्यतिप्रतिदिशंकंडूयतेस्वांतनुं दूरंधावतिनिष्ठतिप्रचलतिप्रांतेषुमायामृगः २ कुटीयेनरामधनुर्लेखांकोपिनाक्रमिष्यतीति २८ इतिश्रीमिश्रमोहनदासविरचितायांहनुमन्नाटकदीपिकायांऔसन्निकोनामतृतीयोंकः ३ अत्रतद्वधपूर्वकंसीताहरणंवर्ण्यते आंदोलयन्निति एककरेणसार्द्धंविशिखमांदोलयन्निति मृगयते अवलोकयति १ हस्ताभ्यामिति मायामृगःप्रांतेषुप्रचलति प्रांतेषुशाल्मभ्याशेषुमायापूर्वकंमृगजात्यनुकरणमाह कदाचिदितिपदाध्याहारःसर्वत्रानुबध्यते हस्ताभ्याशंहस्तप्रात्यलंलेढिलिहआस्वादनेनस्पृश्यतां अस्पृश्यत्वंस्फगमम् २

रामोमृगंलक्ष्मणंदर्शयति ग्रीवेति ग्रीवाभंगेन अभिरामंयथास्यात्तथामुहुरनुपतति पश्चादवलोकयतिस्यंदनेरथचलने बद्धादृष्टिर्ये
नसः भूयसापश्चार्द्धेनपश्चिमशरीरभागेनमदीयशरपातभयात् पूर्वकायंप्रविष्टःपश्चात्संकुचितगात्रइति अर्द्धभक्षितैः दर्भैःकीर्णवि
क्षिप्तंवर्त्मयेनसः कीदृशैः दर्भैःश्रमेणाविवृतमस्फद्घाटितंयन्मुखंततोभ्रंशिभिः पातुकैः एनंपश्यउदग्रप्लुतत्वात् उत्कटोत्पतनात् विय
त्याकाशेबहुतरंप्रयातिगच्छतिभूमौस्तोकमल्पंप्रयाति ३ बाणेनेति यावत्रघुवीरोबाणेनमृगंविव्याधतावदेवतपस्विवेषधा

ग्रीवाभंगाभिरामंमुहुरनुपततिस्यंदनेबद्धदृष्टिःपश्चार्द्धेनप्रविष्टःशरपतनभयाद्भूयसापूर्वकायम् दर्भैरर्द्धा
वलीढैः श्रमविवृतमुखभ्रंशिभिःकीर्णवर्त्मापश्यो दग्रप्लुतत्वाद्वियतिबहुतरंस्तोकमुर्व्यांप्रयाति ३ ततो
वनांतरे० बाणेनदिव्येनरघुप्रवीरस्ततोमृगंवक्षसिबद्धलक्ष्यः विव्याधयावत्तरसातपस्वीदशाननस्तावदि
हाजगाम ४ मारीचमृगयाव्यग्रेरामेप्राप्तेचरावणे भयादिवकुरंगीणामस्याःपश्यामिलोचने ५ सव्याहर
द्धर्मिणिदेहिभिक्षामलंघयन्लक्ष्मणलक्ष्मरेखां जग्राहतांपाणितलेक्षिपंतीमाक्रारयंतींरघुराजपुत्रौ ६

रीदशाननःइहसीतासमीपेआजगामेत्यन्वयः ४ मारीचेति रामेमारीचमृगयाव्यग्रेसतिरावणेप्राप्तेसति अस्याः सीतायाः लोच
नेभयात्कुरंगीणामिवपश्यामि किमप्यनिर्वचनीयनेत्रलौल्यंदृष्ट्वाननंदेतिभावः ५ सइति सरावणोव्याहरदित्युवाच किंतदाह
हेधर्मिणिआतिथ्यदानादानपुण्यपापज्ञेभिक्षांदेहिलक्ष्मणेनकृतायालक्ष्मणः चिन्हस्यलेखातां अलंघयन् सन् तद्बहिराग
त्यपाणितलेक्षिपंतींभिक्षांददतींसीतांजग्राहहृतवान् कीदृशींरघुराजौदशरथस्तत्पुत्रौरामलक्ष्मणौआक्रारयंतींआह्वयंतीम् ६

जटायुर्दशरथपूर्वमित्रे रावणमज्ञात्वाकथयति रेरेनीचसंबोधने भोअहोपरदारचोरत्वयाअधीरंतूर्णंयथास्यात्तथाकिंगम्यतेधी
रस्तृशनैर्गच्छेतिनत्वरया अरेतिष्ठस्वयमहंजटायुःप्राप्तोस्मिअधिष्ठितोअधिवासितःचंदनाचलस्यमलयस्यतटोयेनएतेनप्राश
स्त्यमुक्तम् एनांमुंच ननुइयमेवमयानीतेतिचेन्नकीदृशीपतिरेवदेवतायस्याःसातांचेन्नत्यजसितर्हितवउरसःसकाशात्इयमदीयंच
चंडंतुंडंतदेवांकुशस्तेनयत्क्रूरं अवस्करणंततोयेव्रणास्तेभ्योनिसृतमसृक्रुधिरंपास्यंति यद्वाएकमेवपदंव्रणेभ्योनिसृतमसृक्यस्मिन्ततउरसः
उरःपास्यंतिकर्मणिषष्ठी तदवस्करणंप्रोक्तंतुंडेनोद्भिद्यकर्षणमिति हलायुधः ७ रावणंज्ञात्वाअबलाऽसौ यांकुलवान्चौर्ये

जटायुः दशरथंमैत्रीमनुस्मरन् रेरेभोपरदारचोरकिमरेधीरंत्वयागम्यतेतिष्ठाधिष्ठितचंदनाचलतटःप्राप्तोज
टायुःस्वयम् मुंचैनांपतिदेवतांनखलुचेन्मच्चंडतुंडांकुशक्रूरावस्करणव्रणासृगुरसःपास्यंतिगृध्रास्तव ७ज
न्मब्रह्मकुलेहरार्चनविधौकृत्ताशिरःकृंतनंशक्तिर्वज्रिणिघोरदंडदलनव्यापारशक्तंमनः हेलोल्लासितकेलिकं
दुकनिभःकैलासउत्पाटितस्तत्किंरावणलज्जसेनहरसेचौर्येणपत्नींरघोः ८ ५ ५

करोषितत्तुल्यिनसंभवतीत्याह जन्मब्रह्मकुलेइति हरार्चनविधौशिरःकृंतनंकृत्वावज्रिणिदेवेशेशक्तिःमनःघोरदंडदलन
व्यापारशक्तंये घोरदंडाद्दुर्निग्रहास्तेषांनिग्रहव्यापारेशक्तंसमर्थंभवताकैलासोगिरिरुत्पाटितःकीदृशः हेलयाऽनायासेनउ
ल्लासितःउद्गमितोयःकेलयेक्रीडार्थंकंदुकःतत्सदृशःयथैवकेलिकंदुकस्तथैवतवगिरिरितिभावः तत्तस्माद्देवंबलेसतिचौर्ये
णयन्रघोःरामस्यपत्नींहरसेतत्किंकस्मान्नलज्जसेगूढाक्षेपः ८ ५ ५ ५

अयंमैनाकोगिरिः किंकिंचितर्के अयंकः पुरतोभूत्वाअस्माहनंदेवैरप्यखंडितंमदीयंमार्गंरुणद्धि सपक्षत्वात्तस्यमैनाकस्यशक्ति
मन्मार्गरोधनेसामर्थ्यंकुतः यतः सगिरिः महेंद्रादपिइंद्रसकाशादपियद्वज्रपतनंतस्मादेवभीतः इंद्रएवमत्तोबिभेतितन्निर्जित
स्यगिरेर्मथिकाशक्तिरितिभावः तर्ह्ययंतार्क्ष्योस्तिन सोपिगरुडः निजेनविष्णुनासमंविष्णुबलतुल्यबलंमांरावणंजानातिराव
यतिस्वबलेनलोकानितिरावणः हेतिकष्टंज्ञातंएषः सजटायुः सः कः यः जरसावार्द्धक्येनव्याप्तः सन्वधंवांछतिहाकष्टंखेदस्य।

रावणः सक्रोधंस्वगतंच मैनाकः किमयंरुणद्धिपुरतोमन्मार्गमव्याहतं शक्तिस्तस्यकुतः सवज्रपतनाद्भीतोमहेंद्रा
दपि तार्क्ष्यः सोपिसमंनिजेनविभुनाजानातिमांरावणं हाज्ञातंसजटायुरेषजरसाक्लिष्टोवधंवांछति ९ जटायुः
क्रोधमभिनीयमाभैषीः पुत्रिसीतेव्रजतिमम्पुरोनैषदूरंदुरात्मारेरेरक्षःक्वदारान्रघुकुलतिलकस्यापहृत्यप्रया
सि चंच्वाक्षेपप्रहारत्रुटितधमनिभिर्दिक्षुविक्षिप्यमाणैराशापालोपहारंदशभिरपिभृशंत्वच्छिरोभिः करोमि १०

हननेकिंयशइतिकष्टंद्विजयोयमलंकारः तदुक्तंदंडिना यः पूर्वोत्तरपक्षाभ्यांनिर्णताभवतिस्वयम् शब्दचातुर्ययुक्तोविद्वद्भिर्विजयः
सउदीरितः ९ माभैषीः भयंकामार्षीः दारशब्दोभूम्नेवदशभिस्त्वच्छिरोभिर्दशानामाशापालानामुपहारंकस्थामिकरोमीत्यर्थः
कीदृशैः शिरोभिः दिक्षुदशसुदिशासुविक्षिप्यमाणैः पुनः कीदृशैः चंचोः आक्षेपेणयेप्रहारास्तैस्त्रुटिताः धमन्योनाड्योयेषां
तैः नाडीतुधमनीशिरेतिविश्वः अन्यत्सुगमम् १० अक्षेति पक्षिराट्जटायुः रक्षःपतेः रावणस्यअक्षंचक्रांतरालंका
ष्ठंविक्षिपतिविरूढंचालयति दलयतित्रोटयतिमृद्नातिमर्दयति गर्जतिस्वयंतर्जयतितमभिभवतितिरस्करोति आलंबने
मार्गमवलंब्यतिष्ठतिताडयतितंप्रहरतीति आकर्षयतितत्केशान्विलिखतिअवलुंपतितद्वासांस्यपहरतिप्रचलतिस्व

पक्षलाघवमाविः करोति अंचतिशिरसितत्प्रहारपातेनस्वयंनम्रीभवति उदंचतिस्वचरणकृततत्प्रहारवंचनायउच्चैर्गच्छ
ति ११ क्रुद्धइति करतलप्रहारःसएवशिलातलस्तेन १२ जटायुःआत्मानंशोचयन्नाह राज्यं विषयोयस्याः सद्राज्यंपालयामीति
मैत्रीननिर्व्यूढानिष्पन्नाकृतिनोरामस्ययतःकिमपिकृतंनजातं अतएवभाग्यरहितामितिसंतापमकरोदिति १३

अक्षंविक्षिपतिध्वजंदलयतेमृद्नातिनद्धंयुगंचक्रंचूर्णयतिक्षिणोतितुरगान्रक्षःपतेःपक्षिराट् रुंधन्नुग
र्जतितर्जयत्यभिभवत्यालंबनेताडयत्याकर्षत्यवलुंपनेप्रचडतिन्यंचत्स्फुरंत्यपि ११ रावणःक्रोधंनाटय
न् क्रुद्धस्ततोदृढचपेटशिलातलेनरक्षःपिपेषगहनेद्रुतपक्षिराजम् ईषत्स्थितासुरपतद्भुविरामराम
रामेतिमंत्रमनिशंनिगदन्मुमुक्षुः १२ नमैत्रीनिर्व्यूढादशरथनृपेराज्यविषयानवैदेहीत्राताहठहरणतोराक्ष
सपतेः नरामस्यास्येदुर्नयनविषयोभूत्कृतिनोजटायोर्जन्मेदंवितथमभवद्भाग्यरहितम् १३ हारामहार
मणहाजगदेकवीरहानाथहारघुपतेकिमुपेक्षसेमाम् इत्थंविदेहतनयामुहुरालपंतीमादायराक्षसपति
र्नभसाजगाम १४ आकृष्यमाणाभरणानिमुक्त्वासैरध्वजीमारुतिमद्रिमौलौ उवाचरामायचलक्ष्म-
णायवरायदेयानिचदेवराय १५ ७ ७ ७ ७

कृतमंउपेक्षसे उपेक्षांकरोषि १४ आकृष्येति आकृष्यमाणासैरध्वजी
सीरध्वजोजनकस्तदपत्यंस्त्रीसैरध्वजीसीताअद्रिमौलौगिरिशिखरेस्वाभरणानिमुक्त्वाउन्मुच्यमारुतिंहनुमंतमुवाच
किमुवाचेत्याह वरायश्रेष्ठायरामायदेवरायपतिभ्रात्रेलक्ष्मणायचाभरणानिदेयानि १५ ७ ७

रामेतिदक्षिणभागेशुष्केस्थाणौनीरसवृक्षखंडेकरटं अवलोक्य पुनरागच्छन् मारीचं हत्वा पर्णशालां प्रत्यागच्छन् सन् काकेतुकर
टारिष्टबलिपुष्टसकृत्प्रजा इत्यमरः कोणत्रयेषु सीतां प्रसमीक्ष्य चतुर्थः शालाकोणस्तेन रामेण न दृष्टः कथं तद्दर्शनाभावातिशोकभीत्या इत्यर्थः १६
इति श्रीमि० हनु० टीकायां सीताहरणं नाम चतुर्थोऽङ्कः ४ ततो रामस्य किंवृत्तमासीत्तदाह द्यूतेनिविधिवशाद्दैवयोगाज्जनकात्मजायाः इद
मुत्तरीयं मया प्राप्तं इदम् किं न यत्तदोर्निरसियोगात् यत् द्यूते पण इत्यादि सर्वं सुगमम् १ तच्चरणचिन्हमलक्ष्य विचिकित्सति बहि-
रिति बहिरपि पर्णशालाबहिर्भागेऽपि कायिनः स्त्रियः पुरुषस्य वा पदानां पंक्तिर्न अंतः कुटीमध्येऽपि न तदिदं किमिति विचिकित्सा इयं यात्र

रामः शुष्केस्थाणौ दक्षिणे रटंतं करटमवलोक्य पुनरागच्छन्निजप्राणप्रयाणमेवमन्वानः क्षणं विश्रम्य माया
कुरंगं विनिहत्य रामोऽभ्यागात् सहागात् स च पर्णशालाम् कोणत्रयेषु प्रसमीक्ष्य सीतां दृष्टश्चतुर्थो न च शोकभीत्या १६
इति श्रीहनुमन्नाटके चतुर्थोऽङ्कः ४ गद्यम् रामः प्राणोत्क्रमणसमयादपि घोरतरं वियोगसमयमधिगम्य पर्णशा
लांतरालमालोक्य कथमपि विदीर्यद्धृदयमार्गाद्विनिर्गमिष्णून् प्राणान् धारयन् तदुत्तरीयमुपलभ्य जानकीं स्मरन् रो
दीत् द्यूते पणः प्रणयकेलिषु कंठपाशः क्रीडापरिश्रमहरं व्यजनं रतांते शय्या निशीथसमये जनकात्मजायाः प्रा
प्तं मयाधिविवशाददमुत्तरीयम् १ बहिरपि न पदानां पंक्तिरंतर्न कापि किमिदमियमसीता पर्णशाला किमन्या
अहमपि किल नायं सर्वथा राघवश्चेत् क्षणमपि न हि सोढा हंत सीतावियोगम् २ ५ ५ ५

स्थासा असीतेव न पर्णशालैवान्या किं किल सर्वथा अयमहं राघव एव न चेत् स्यात्तर्हि क्षणमपि सीतावियोगं न सोढा एतेनोन्मादो द
र्शितः तदुक्तं रसोदधौ प्रौढानंदाघनोर्विरहात् योद्भ्रमः स उन्माद इति २ ५ ५ ५ ५ ५

मध्योयमिति भोमैथिलि ज्ञातंकुत्रापित्वदीयंचिन्हमपिनलक्ष्यतेतः कांतारेच अधुनामहिनाभूतावसरेसकलैरेतैर्विनाश्यहृतानीतासिगृहीतासिपशुवत् यथापशुर्विनाश्यगृह्यतेतद्वत् येनांगेनेयेषा मवमानः तदंगंतैरेवगृहीतमित्याह मातंगैः गजैर्हंसैश्चागमनमेव कथंकथंविभक्तमिति अहोएतदाश्चर्यंउभयैरेकंकथंगृहीतमितिएतेनगुणकीर्तनावस्थादर्शितासोत्कारसोदधौवैरहकांताविषयप्रशंसनंस्याद्गुणाख्यानमिति ३ युक्तेतिआत्मानंशोचन्नाहईदृशीअसंबद्धा असंबंधत्वमाहहिरण्मयोमृगःक्वापिदृष्टःश्रुतोवास्तिनक्वापीत्यर्थः ४ आलिंगितेति रामइतिआरोदीत्इतिकिंहेदयितेत्वंक्वगताअत्रत्वंआलिंगितामयेतिशेषः आलिंगनसुखेननेत्रसंकोचा

मध्योयंहरिभिःस्मितंहिमरुचानेत्रेकुरंगीगणैःकांतिश्चंपककुड्मलैःकलरवोहाहाहृतःकोकिलैः मातंगैर्गमनंकथंकथमहोहंसैर्विभज्याधुनाकांतारेसकलैर्विनाश्यपशुवन्नीतासिभोमैथिलि ३ युक्तमेवहिकैकेय्यायदहंप्रेषितोवनम् ईदृशीयस्यमेबुद्धिर्मृगःक्वापिहिरण्मयः ४ प्रकीर्णपुष्पमालांपर्णशालामालोक्याह आलिंगितात्रसरसीरुहकोरकाक्षीपीताधरातिमधुरंविधुमंडलास्या रंगावतारमकरंदविमर्दितानिपुष्पाण्यमूनिदयितेक्वगतेत्यरोदीत् ५ गाहंगाहंगह्वरकांतारवनांतान्दर्शंदर्शंनूदर्पकभल्लीरिववल्लीः स्मारंस्मारंदूरगतांनामथकांतांरामःकांतामद्रिचरोदीनमरोदीत् ६ कोरकत्वमुक्तंकलिकाकोरकः पुमान्इत्यमरः अतिमधुरत्वेहेतुः विधुमंडलसदृशास्यारंगानांकेलीनामवतारआविर्भावस्तत्रयोमकरंदःकामरसः तेनविमर्दितानीत्यर्थः ५ गह्वराणिसघनानिकांताराणिदुर्गवर्त्मानियेषुतानिगाहंगाहंअवगाह्यअत्रसर्वत्रल्यबर्थेणमुल्नम्निन्सतिद्धित्वंकामभल्लीरिववल्लीः दृष्ट्वादृष्ट्वास्मारंस्मारंस्मृत्वास्मृत्वाकीदृशींकांतांकस्यरामस्कुरवस्यअंतोअस्याः तांविरहेणरामदुखदामितिअद्रिचरोभूतापर्वतस्थोभूत्वादीनंयथास्यात्तथाअरोदीत् ६

७ ८ ९ हेवृक्षाः यूयंपर्वतस्थाउच्चस्थैःसर्वंदृश्यतइति ध्वनितंकेनापिसीतानीताहृतावाभवतांमध्येकेनापिदृष्टाकीदृशायूयंगिरि
गहन लतावायुनावीज्यमानाएतेनवायुवशात् तत्रस्थापिसीताभवद्भिर्ज्ञायतेएवेत्यर्थः इत्यर्थः क्षाउचुः भवान् कः राघवआहअहं
रामःशोकएवशक्रोग्निस्तेनदग्धः सप्तार्चिर्दमुनाः शक्रइत्यमरः तर्हिकीदृशीसीतेत्यपेक्षायामाह बिंबोष्ठीत्यादिबद्धानागेंद्रस्येवकांचिर्ये

सभूरजोरंजितसर्वकायोबभ्रौविभुर्मन्युविदीर्णचेताः योषिद्वियोगानलदह्यमानंस्वकांतमालिंगयतीवभूमिः
७ सीतेतिहाजनकवंशजवैजयंतिहामाद्विलोचनचकोरनवेंदुलेखे इत्थंस्फुटंबहुविलप्यक्लिप्यरामस्तामेवपर्ण
वसतिंपरितश्चचार ८ हाजानकिप्रचलितोत्पलपद्मनेत्रेहामेमनःकमलकाननराजहंसि एषप्रियेत्वद्वियोग
जवन्हिदग्धोदीनंप्रयामिभवतींक्वविलोकयामि ९ रेवृक्षाः पर्वतस्थागिरि गहनलतावायुनावीज्यमानारामोहं
व्याकुलात्मादशरथतनयःशोकशक्रेणदग्धः बिंबोष्ठीचारुनेत्रीस्तनविपुलज घनाबद्धनागेंद्रकांचीहासीताकेननी
तामत्हृदयगताकोभवान्केनदृष्टा १० हेगोदावरिरम्यवारिपुलिनेसीतानदृष्टात्वयासाहर्तुंकमलानिवा
गतवतीयातावविनोदायवा इत्येवंप्रतिपादपंप्रतिनगंप्रत्यापगंप्रत्यगंप्रत्येणंप्रतिबर्हिणंततइतस्तांमैथिलींया
चते ११

यासायद्वाबद्धानांगेंद्रस्यकाचीययासा करिकुंभमणिस्तोमनानारत्नोत्करेधिता मध्येकुंभाकृतिस्वर्णसानागें
द्रास्ययामतेति १० ततोवर्तायगोदावरीमासाद्याहहेगोदावरित्वयासीतानदृष्टाकमलान्याहर्तुं आगतवतीरम्यवारिपुलिने-
विनोदायवाआगताइत्यनेनप्रकारेणएवंयथागोदावरीपृष्टानथैवप्रतिपादपंपादपंपादपंप्रतिजानकींयाचतेस्मइतिसर्वत्रयुज्य
तेआपगानदीअगो गिरिःएणोमृगः ११ ७ ७ ७ ७

वदयूयंके एकवचनेबहुवचनंवैकृव्यादेवतत्रलक्ष्मणः हेनाथनाथ आदरेवीप्सासंभ्रमेवायद्वाहेनाथनाथनाथाःब्रह्मादयस्तेषामपिनाथस्त्वा
भिन्निदंवैकृव्यंकिंअहंनेदासःलक्ष्मणोस्मिहेवत्सअहंकःलक्ष्मणःसइतिप्रसिद्धःअर्थएवभगवानविंसैस्वर्यःरामःसआर्यःकःलक्ष्मणः राघवः
रघुवंशजन्मा रामःअत्रविजनेजनशून्येवनेकिंकुर्मःलक्ष्मणःइतस्ततःदेवींसमुद्वीक्ष्यतेरामःदेवीकालक्ष्मणःजनकाधिराजतनयारामः हाक
ष्टंहेप्रियेहेजानकीविषमोयमलंकारःउत्कंचवीरभानौउक्तिप्रत्युक्तिचातुर्यनिबद्धोविषमोमतइति १२ इदंतवकिंजातम् १३ अर्द्धोतिदिनस्य।

पुनःलक्ष्मणमासाद्यवैकृव्यंनाटयति केयूयंवदनाथनाथ किमिदंदासोस्मितेलक्ष्मणःकोहंवत्ससआर्यएव भगवा
नार्यःसकोराघवः किंकुर्मोविजनेवनेततइतोदेवींसमुद्वीक्ष्यते कादेवीजनकाधिराजतनया हाहाप्रियेजानकि १२
सौमित्रिणासहरामः अत्रांतरेवनांतंपर्यटन्जनकतनयातापिनःपापिनोरजनिचरपतेर्भुजभुजंगमंडलीखं
डितोरगवधूवैधव्यधातारंविपक्षरक्षसानिहतंघोरसमरमूर्च्छितंपक्षिराजंजटायुषंभुग्नंचरावणरथमालो
क्य ज्ञात्वादशरथस्यनमित्रंशत्रुनिषूदनम् हाताततकिमिदंनामरामःपक्षींद्रमब्रवीत् १३ जटायुः अर्धरात्रे
दिनस्यार्द्धे अर्धचंद्रेर्धभास्करे रावणेनहृतासीता कृष्णापक्षेसिताष्टमी १४ इदंदेवदिनस्यार्द्धेसतितेनचैत्रउक्तः

मकरादिषट्दिनंकर्कादिषट्निशेतिश्रीपतिःमासेनस्यादहोरात्रःपैत्रोवर्षेणदैवतइत्यमरः तत्राप्यर्धरात्रेसतिपितृणामर्धरात्रे-
सतिअकृष्णपक्षेपितृणांपाक्षिकीरात्रिर्भवतितदर्धेपक्षार्धेसति कस्यपक्षस्येत्यपेक्षायामाह कीदृशेअर्धरात्रेअकृष्णपक्षे अ
कृष्णःशुक्लःपक्षोयस्मिन्एतेनचैत्रशुक्लपक्षोद्योतितःपुनःकीदृशेअर्धेरात्रेअर्द्धःअष्टकलश्चंद्रोयस्मिन्तत्रापिकस्यांति
थौइत्यपेक्षायामाह यत्रयस्मिन्दिनेसिताष्टमीसितेनशुक्लेनयुताअष्टमीमध्यमपदलोपीसमासः तत्रापिकस्यांवेलायामि

स्यपेक्षायामाह कस्मिन्सति अर्द्धभास्करे सति मध्यंदिनवर्तिन्यादित्ये सति सर्वपदैश्चैवमुक्तंभवति चैत्रशुक्लपक्षसिताष्टम्यां मध्याह्ने सी
ताह्रतेति केचिदेवंव्याकुर्वंति कृष्णपक्षे सीताह्रता कृष्णो स्त्री माघकृष्णयोरिति चरकः कीदृशे कृष्णपक्षे पितॄणामर्द्धरात्रे शुक्लपक्षः
पितॄणां रात्रिः पुनः किंभूते दृष्टः माघस्नाननिमित्तं अर्द्धभास्करो यस्मिन् अर्धोदितेरवौ स्नातो माघे स्वर्गमितो भवेत् अन्यत्पूर्ववत्
एतदर्थेन एवंमुक्तंभवति माघशुक्लपक्षसिताष्टम्यां प्रातः सीताह्रतेति उक्तंच वाराहपुराणे चैत्रमाससिताष्टम्यां मूहूर्ते वृंदः
संज्ञिते राघवस्य प्रियां सीतां जहार दशकंधर इति वृंदः पूर्वाण्ह इति धरणिः १४ भग्नोयमिति वज्रांकुरवत् वज्रधारावत्

अत्रेति वाक्यशेषः रामः भग्नोयं कथमस्तिरावणारस्थस्तातेन वज्रांकुरक्रूरावस्करणेन भंगुरलसत्कोटित्रुट
ज्यं धनुः हे सीरध्वजराजपुत्रि सत तथा दृष्टस्त्वया धन्यया पक्षींद्रो दशकंठकुंजरशिरःसंचारिपंचाननः
१५ तात त्वं निजतेजसैव गमितः स्वर्गं व्रजस्वस्तितेब्रूमस्त्वेकमिमां च धूत्वेति कथांताताति केनाकृथाः
रामोहं यदितद्दिनैः कतिपयैर्व्रीडानमत्कंधरः सार्द्धं बंधुजनेन सेंद्रविजयी वक्तास्वयं रावणः १६

क्रूरंदुःसहंयदवस्करणं तुंडेनोद्विद्याकर्षणम् तेन भंगुरे वक्रे लसत्यौ यो कोटी धनुषअग्रभागौ ताभ्यां सकाशात्त्रुटंतीज्या
यस्य तद्धनुरपि कथंभग्नमिति इत्युक्त्वा पुनः दृष्टवत् सीतामाह सीते धन्यया त्वया स पक्षींद्रो जटायुः तथा युध्यमानो दृष्टः
धार्मिकदर्शनाद्धन्यत्वं यः दशकंठएवकुंजरः तच्छिरःसु संचरणशीलः सिंह इति १५ सीताह्रतिं दशरथं मा श्रावयेति लज्जया
वारयति हे तात त्वं निजतेजसैव निजदर्पेणैव स्वर्गं गमितः प्रापितः व्रजते स्वस्ति स्वर्गान्ते मोक्षोस्त्व परं तु एकं निरूपमं त्वां प्रति-
ब्रूमः किं तदित्याह इमामिति बंधुजनेन कुंभकर्णादिना इंद्रविजयी मेघनादस्तेन सहितः वक्ता शीघ्रं वद्रिष्यतीति १६

आरुक्तस्यात्कोपपीडयोरित्यमरः अमोघाइति काननेषु मृगीवधे मृगवधनिमित्तं कृष्टाः आकृष्टाः येनालीकाः बाणाः तस्य रामस्य ते अमोघाः सफलाः नालीक शरमार्गणाइतिविश्वः दूरान्नहननमितिचेत्तत्राह दूरघाती दूरादेव हन्तुं शीलमस्य रामस्यास्तीति बाणसफलत्वदूरघातित्वयोः सतोरपि सीतानयनशंकयाइमेनेत्रे सीतायाः नयने भवतः इतितन्नेत्रसादृश्यमात्रमासांनेत्रेतिष्ठतीति तद्धननेन स्त्रीयापराधः स्यादितिशंकयाइतिकिंप्रामदयावानभूदित्यर्थः इतिशब्देनदथार्किंशब्देनप्राधिरि

रामः वनेचरान्मृगान्विलोक्यआः खलुदुरात्मनाममीषांरूपेण मारीचिनाप्रपंचमवलंब्य प्राणवल्लभाश्लेषतोविश्लेषितोहमितिअहंपुनः मृगीचक्रवधेन कुरंगाणांप्रियाविरहमुत्पादयामीतिविचार्य अमोघाः कृष्टनालीकाः काननेषुमृगीवधे रामः किंदूरघातीतिसीतानयनशंकया १७ ततः कुथंकथमपिभगवतिभास्करेस्ताचलावलंबिनिप्रलयकालोदितप्रचंडमार्तंड मंडलमिवोदितंचंद्रमंडलंतरुणाकोपारुणदारुणंतरपिमंडलमिवावलोक्य रामः सौमित्रिनेनसंसेव्यतांतरुतलंचंडांशुरुज्जृंभतेचंडांशोर्निशिकाकथारघुपतेश्चंद्रोयमुन्मीलति वत्सैतद्भवताकथंनुविदितंधत्तेकुरंगंयतः कासिप्रेयसिहाकुरंगनयनेचंद्राननेजानकि १८ तिसमासोच परिच्छेदे द्यायाभितिसंमतमितिधरणिः निंदनेचवितर्के चप्रश्नो प्रश्नेकिमव्ययंइतिविश्वः शंकोत्कारसोद्धौ स्त्रीयापराधचौर्यात्कृतपरचौर्यादितोमताशंकेति १७ वियोगिपापिविरहिजीवेषुतरुणोत्त्रियामितिन्वरकबलात्तरुणेषुवियोगिषुयः कोपस्तेनारुणंचंद्रमंडलंयद्वा तरुणेषु पापिजनेषुयः कोपस्तेनारुणंतरणिनंदनंयममिवेतिकुरंगनयननिभेचंचलेनयनेयस्याः सामध्यमपदलोपीसमासः उक्तिप्रत्युक्त्यार्थज्ञानंविषमोयमलंकारः तल्लक्षणंपूर्वमुक्तम् १८

मंदरेणेति हेपापिन्परसंतापदातः मंदरेणगिरिणाअब्धिमंथनेनमथितोसिनचूर्णीकृतः ततोपितमसाराहुणापिनज्वालितः क्रो
धाग्निनानदग्धः तमस्तुराहुःस्वर्भानुरित्यमरः स्वाशंकोमोहिनीसूचनेनापिदुरात्मन्नितिसुक्तंताभ्यांपरिमुक्तमपि त्वांअहः
मेवशतधाशतप्रकारंपरिनिन्येप्रापयामि यदित्वंजानकीसुखसमोनस्याः अत्रोन्मादावस्थांतरंगवाचिकव्यथोदितोयासोद
र्शितः तदुक्तंरसोदधौ स्यादुन्मादःकांताचित्तव्यथागोचरायासः कायिकवाचिकभेदाद्विधोदितोयंव्यथोदितायासः तत्समद्र
व्यंद्दस्वायदुपालंभःसवाचिकाख्यइति तत्समंद्रव्यंसुखादिसद्दशंचंद्रादि १९ अत्राप्युक्तिप्रत्युक्तिः वार्यतांशाम्यतांउज्जिहीते

रामश्चंद्रमधिक्षिपति मंदरेणमथितोसिनपापिन्ज्वालितोसितमसानदुरात्मन् त्वांशरेणशतधापरिनि
न्येजानकीमुखसमोयदिनस्याः १९ अपिचलक्ष्मणंप्रति सौमित्रेदाववन्हिस्तरुशिखरगतोवार्यतां
निर्झरोघैः कावार्तादाववन्हेरयमुदयगिरेरुज्जिहीतेहिमांशुः धत्तेधूमंहिमांशुः कथयकथमयंनेव
धूमोधरण्याश्छायेयंसंगताभूदयिधरणिसुतेकुत्रकांतेसिसीति २० रामः स करुणंआत्मनिप्राण
वल्लभायाःपरमप्रेमाणमधिगम्य शंकेशशांकेजगुरंकमेकेपंकंकुरंगप्रतिबिंबितांगम् धूमंचभूमं
डलमुद्गतारग्नेर्वियोगजातस्यममप्रियायाः २१ उदयतेचंद्रेशामत्वमालक्ष्याह धूममिति अयिइतिकोमलामंत्र
णे २० आत्मनिहृदये एकेकवयः शशांकेचंद्रे अंकजगुः अंकंपदेलक्ष्मणेचहरशिरस्थानेतदभावादनुज्वलत्वं एकेपंकंवि
योगिदुःखदातृत्वजन्यपापंश्याममेव अस्त्रीपंकंपुमान्पाप्माइत्यमरः एकेअस्मिन्नेवप्रतिबिंबितांगंकुरंगमेनंचंद्रवाहनंमृ
गंजगुः मृगप्रतिबिंबमितिचशब्दात्पुनर्ग्रहणंप्रतिबिंबितांगंभूमंडलंजगुः उक्तवंतः उक्ताक्षेपोयमिति अहंतुप्रियायाः सीता
याः सकाशादुद्यतोयोग्निस्तस्यधूमंशंकेमन्ये कीदृशस्योद्गताग्नेः ममवियोगजातस्य २१

गि

अथ सीतास्मरणादुच्छ्रितं काममाक्षिपति रेरेइति रेरे दुर्जनय॰ कृत्स्यज्ञानहीन भोदुर्निवार दुराग्रह मदनपंकेरुहानेव बाणान् संहृणु
संहृणु उपसंहरेति संभ्रमे वीप्सा ममेत्यध्याहारः वपुः कांतासंगस्य योवियोगः तेन जातोयोहुतभुक् अग्निस्तस्य ज्वालाभिः प्रदग्ध
मस्तीति अन्यत्सुगमम् २२ कामव्यथामनुभूयान्यवियोगिनोनुकंपयन्निवाह आपुंरवाग्रमिति अथवा मां प्रहर बाणान् मासंहृणु हे
काम ते अमी पंचैव बाणाः क्षोभणमोहनशोषणविद्रावणनिलायनशीलाः एते आपुंरवाग्रं यथा स्यात्तथा समं एकदैव मम मनसि
हृदये मग्नाः संति इदं मदीयं वपुः तेनैव बाणैः सार्धं मदनाग्निना निर्दग्धं दग्धपूर्वं यज्जातं यद्वा मदनेति संबुद्धिः अग्निना वियोगाग्निना

रेरे निर्दय दुर्निवार मदन प्रोत्फुल्लपंकेरुहान् बाणान्संहृणु संहृणु त्यज धनुः किं पौरुषं मां प्रति कांतासंगवियो
गजात हुतभुक् ज्वालाप्रदग्धं वपुः शूराणां मृतमारणे नहि वरो धर्मः प्रयुक्तो बुधैः २२ अथवा आपुंरवाग्रम॰
मीशरा मनसि मे मग्नाः समं पंच ते निर्दग्धं मदनाग्निना वपुरिदं तैरेव सार्धं पुनः कष्टं काम निरायुधोसि भवता
जेतुं न शक्यो जनो दुःखी स्यामहमेक एव सकलो लोकः सुखं जीवतु २३ तत्रापि क्षणं विकसिताशोकतरुतले विश्रा
म्याह स्म दाशरथिः रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैस्त्वामायांति शिलीमुखाः स्मरधनुर्मुक्ताः सखे
मामपि कांतापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः २४

जातं पूर्वं यज्जितं तज्जितमेव पुनरपि अधुना हे काम भवता जनो लोकः जेतुं शक्यो न यतस्त्वं निरायुधोसि दग्धबाणत्वादन्यास्त्राभावाच्च क
ष्टं यथा स्यात्तथा एक एवाहं दुःखी स्यां त्वद्बाणशल्यमरणत्वात् अन्यो लोकः सुखं जीवतु त्वदातंकाभावात् २३ हे अशोक वृक्ष आवयोः
सर्ववृत्तं तुल्यं परं तु एतन्महद्वैलक्षण्यं यत्त्वं अशोकः अहं धात्रा केनापि दुरदृष्टेन सशोकः कृतः प्रियाविरहित्वात् तुल्यत्वमे॰

वद्योतयन्ति शिलीमुखाःभ्रमराःबाणा अपिवास्मरधनुर्मुक्ताःपुष्पेभ्योनिर्मुक्ताःपुष्पधन्वाउभयथाग्राह्यः अशोकः स्त्रीपादस्प
र्शात् अलंविकसतीनिश्रुतिःशमेपिपादतलाहतिःपद्मारब्धबंधाभिप्रायेणतदुक्तंकामावतारे धृतैकपादाजघनेकुर्वंत्यन्यपदाह
तिं शनैःशनैर्निर्धुवनेपद्मबंधस्तदामत इति २४ सुगमं एतेनदेवस्यदुर्लंघ्यत्वमुक्तम् २५ चंडकरोरविः तद्वदाचरतिसूत्वी
वस्त्रवेधनलोहस्तत्कुलवदाचरति स्फुलिंगोऽग्निकणःपुमानितिविश्वः एतत्पद्येनकुट्टिमितंद्योतितंतदुक्तंरसोदधौ शशिपा
टीरालेपंपंकजयाम्यानिलादिरुपयाति सर्वंदुःखवदेतत्कुट्टिमितंतत्रसंभवतीति २६ तद्विरहेप्राणधारणादात्मनिकाठिन्यं
प्रारब्धावश्यभोग्यत्वंदर्शयति मांसमिति इत्थमुक्तप्रकारेणविरहवपुषः तस्मात्सकाशात्सर्वंतत्वजातंनष्टंएवंतत्वाभावेपि

पुनरपिप्रलपति हारोनारोपितःकंठेमयाविश्लेषभीरुणा इदानीमंतरेजाताःपर्वताःसरितोद्रुमाः २५ चंद्रश्चंड
करायतेमृदुगतिर्वातोपिवज्रायतेमाल्यंसूचिकुलायतेमलयजालेपःस्फुलिंगायते रात्रिःकल्पशतायतेविधिव
शात्प्राणापिभारायतेहाहंतप्रमदावियोगसमयःसंहारकालायते २६ मांसंकार्श्याद्विगतमपांबिंदवोबाष्पपा
तात्तेजःकांतापहरणवशाद्वायवःश्वासदैर्घ्यात् इत्थंनष्टंविरहवपुषस्तन्मयत्वाच्चशून्यंजीवत्येवंकुलिशकठिनो
रामचंद्रःकिमेतत् २७

सतिरामचंद्रोजीवति यतःकुलिशकठिनःवज्रवत्हृदयकठिनः एतत्किमित्याश्चर्यंएतेनप्रारब्धाव
श्यभोगत्वंदर्शितंतत्वनिर्गमप्रकारमाह अभिनवंस्वसहचरंमांसंनष्टमभूत् अविरलबाष्पपातादपांबिंदवोपिनष्टाः कांतापहरणव
शात् तेजोनष्टंतेजोनाशःश्वासदैर्घ्याद्वायवोनष्टाः तन्मयत्वात्सीतागतांतरत्वात् शून्यं आकाशनाशः उक्तंचसिद्धांतमुक्ताव
ल्यां तस्मिन्यत्कठिनत्वंसाभूःतज्जलंयद्द्रवात्मकं तेजोभवेद्युदुष्णंतत्संचरेद्यःसमारुतः सुषिरंयत्तदाकाशमितिपंचात्मकंव

पुः इतिकारणाभावात्कार्यस्याप्यभावइतिन्यायादेतत्कार्येंद्रियगणोपिनष्टइति उक्तंचतत्रैव श्रवणौव्योमतोवायोस्त्वङ्नेत्रेतेज
सोजलात् रसनाभूमितोघ्राणमितिपंचेंद्रियोद्भवइतिग्राहकाभावेग्राह्यस्याप्यभावइतिन्यायादिंद्रियग्राह्यविषयाणामप्यभावः ए
तेनवाग्वादिपंचकंइंद्रियपंचकंविषयपंचकंनष्टमितिध्वनितं कर्मेंद्रियाणाल्ययोवायावेवतेषांप्राणशक्तिमत्वात् मनोबुद्धिचित्ताहंकारा
णांपृथिव्यप्तेजोवायूनांसात्विकांशेभ्योजातानामतस्तेषांपृथिव्यादिध्वेवांतर्भावस्तदभावेतेषामप्यभावः अतश्चतुर्विंशतितत्वविगमेपिय
ज्जीवतितदाश्चर्यमिति २७ पद्याटवीवर्णनापूर्तिमन्यमानःकविः गद्यात्रयंवर्णयति एवमित्यादिना अत्रश्लोकचतुष्टयस्यैकएवयोगः

गद्यम् सलक्ष्मणोरामः एवंदैवयोगाद्घोरगवयगजभुजंगशरभशार्दूलकोलबहुलकोलाहलाहूतभूतवेतालस
मुत्तालकालकरालचक्रवालकंठनालप्रोच्छलत्तुमुलघोरचीत्कारमिलितबहलांधकारकलितगव्हरांतरालविल
सदविरलसरलपरिमलबहलचंचलगलद्विमलमकरंदबिंदुकीलालजालपिच्छिलालवालल्लुलितप्रमत्तालिमाल
मंदानिलांदोलवाचालदरदलितललितमाकंदवृंदबकुलमुकुलधूलिजालखेलत्कोकिलकुलविलासिनीकोमला
लापनिखिलगिरिशिखरशिखिलास्यलीलाकलापसानुकूललोलद्गोलांगूलचंचच्चकोरचक्रमंजुगुंजद्वृक्षपक्षि
णीपक्षदृटीद्विम् २८ एवंदैवयोगादटवीमटन्महावराहस्कंधारूढंवामतोविलोक्याहस्मरामइति अग्रिमश्लोकेनान्वयः की
दृशीअटवीएवंपूर्वरीत्यादैवयोगाद्विधिवशाद्भुजंगोचित्रमृगःभुजंगोसर्पश्चित्तलावितिधरणिः शरभोष्टापदःकोलोवराहःकोलःपो
त्रीकिरिःकिटिरित्यमरः गवयादिकोलांतानांकोलाहलेनाहूताःयेभूताःवेतालाश्चरुद्रगणभेदाः तेषांसमुत्तालाः येकालवत्कराला:
भयंकराश्चक्रवालाःसमूहाः चक्रवालंतुमंडलमित्यमरः तेषांकंठनालेभ्योप्रोच्छलत्प्रकटीभवत्तुमूलोव्यक्तोघोरचीत्कारस्त-

स्मान्मीलितोयोबहुलांधकारस्तेनकलिताः वेष्टिताः येगह्वराणामंतरालाःमध्यप्रदेशाः तेभ्यःविलसन्योअविरलःसरलपरि
मलः बहुतरसरलवृक्षगंधः तद्युक्ताः येबहुलाः बहुतराः गलंतःस्वच्छमकरंदबिंदवस्तएवकीलालजालंजलपूरम् पयःकी
लालममृतमित्यमरःतेनपिच्छिलाःपूर्णाःयेआलवालाःवृक्षमूलगर्ताःतत्रलुलिताःलब्धाःयेमत्ताःअलयोमत्तभ्रमराःते
षांमालाःपंक्तयोएताभिश्चपरंमदानिलांदोलनेनवाचालानिशब्दितानिदरंदलितानिफुल्लानिललितानियानिबकुलमुकुलानि
तेषुखेलंत्योयाःकोकिलकुलविलासिन्यस्तासांकोमलालापेननिखिलानिपूर्णानिवृक्षशिखराणितेषुमयूरनर्तनलीलासमूहस्य

गगनचुंबनबहुलक्ष्यविपुलफलभारावलंबनालंबितानंतजंतुसंतोषपोषानिर्दोषभूषणाध्युषितनिःशेषस
विशेषामृतवर्षस्पर्द्धिवर्द्धिष्णुरससरसालप्रियालहिंतालतमालकृतमालविशालशालमलमालूरशल्लुकीशि
रीषासनशमीशाकशिंशपाशोकचंपककरदारकोविदारकर्णिकारसिंदुवारबहुसारनिंबजंबूदुंबरकदंबकरं
जसोभांजनबकुलनिचुलकरुखर्जूरबीजपूरजंबीरभांडारवानीरकाश्मीरनारंगकर्मरंगकदलीचंदनालिंगि
तालवल्लीधात्रीवटकुटजपाटलीकोलकंकोलचोलभल्लातकबिभीतकहरीतक्याघातककेतककंकतवैकंकत
मधूकबंधूकजंबूतीजपाश्वत्थकपित्थतिंतिणीनागकेसरादिद्रुस्तरामरण्यानींपर्यटन्महावराहस्कंधारूढसुल्क
टंरंटंतकरटंवामतोविलोक्य २९

स्यसानुकूलनर्तनोत्साहहेतवोइतस्ततश्चलंतश्चकोरास्तेषांचक्रेणसुक्तंयथास्यात्त
थागुंजंत्योयाःवृक्षस्थाःपक्षिण्यस्तासांपक्षस्यआत्मवर्गस्यवृद्धिर्यस्यांतामटवीमटन्नित्यग्रिमेणान्वयः २८ पुनरपिअटवी
मेववर्णयतिपुनःकिंविशिष्टामटवींगगनचुंबनेआकाशावलोकनेबहुलक्ष्यंयेस्तेउन्नतवृक्षाःतेषांयेविपुलाःफलभारास्तएवा

लंबनंतत्रावलंबिताः येअनंताः जंतवः तेषांसंतोषपोषएवनिर्दोषभूषणंयेषांतेष्वध्युषितः स्थितोयोनिःशेषःपूर्णः सविशेषो
विविधस्वादुः अमृतवर्षस्पर्धीअमृतादपिरमणीयःवर्धिष्णुः प्रतिदिनंवर्धमानोयोरसस्तद्युक्ताः येरसालादयःस्तैर्दुस्तरांराजा
दनंप्रियालः स्यादित्यमरः हिंतालोहिंगोटकःकृतमालःकर्णाचलः मालूरोबिल्वःकोविदारश्चमरिकःसिंदुवारःबहुसारः सप्त
पर्णः सोभांजनंशिग्रुतीक्ष्णगंधकाक्षीरमोचकाइत्यमरः निचुलोहिज्जुलोंबुजन्मंजिष्ठारोमरंगोस्त्रीकर्मरंगोगरुःपुमानित्यधर
णिः अम्लानकोम्लवेनःवैकंकनःकंकतिकः उत्कटंयथास्यात्तथारटंतंकरटंकाकंवामतःवामभागेकाकेतुकरटारिष्टइत्यमरः२९

दक्षिणतस्तुदक्षिणाचलप्रचलितमलयमालतीमरुबकलवंगकंकोलदमनकजातीनगरशतपत्रादिकमल
मुकुलकुमुदिनीकल्हारपरिमलभिलितचुंबितताम्रपर्णीकावेरीतुंगभद्रासांद्रगंभीरनीरधारातरंगपरिपीन
मैत्रावरुणतरुणीलंकाशशांकरुद्रपादाद्रिसरलसिंहलसालकश्रीगोपालकपांड्यमंडलगिरिप्रवालचोलकु
तलकेरलपुन्नाटककर्णाटककरहाटविदग्धाभकामिनीनीरंध्रपीनस्तनवदनघनजघनदोर्मूलधम्मिल्लभारांत
राधिष्ठितश्रीखंडागरुकर्पूरमृगमदकुंकुमस्तोमसंभूतयक्षकर्दमविमर्दवर्धितविविधगंधकुसुमबहुलपरिम
लोद्गारिमारुताशनोत्थितक्षीरनीहारकाश्मीरस्फटिकशङ्खशंखकर्पूरकुंदावदातमहाभुजगस्फीतफूत्कारप्र
फुल्लफणामणोत्क्रीडितंशोकभंजनंखंजनंचावलोक्यवामेनाक्ष्णासकरुणंसबाष्पंचदक्षिणेनसविस्मयंसानंदम
भवदिति ३०

रामःसविस्मयंयथास्यात्तथादक्षिणभागेखंजनमवलोक्यसानंदंयथास्यात्तथाअभवदिति शोकभंजनं
काकदर्शनाशुभहरंचपुनःवामेनाक्ष्णाकाकंदृष्ट्वासबाष्पंसकरुणंचयथास्यात्तथासीदित्यन्वयः कीदृशंखंजनंएवंभूतसर्पफ

णामणौक्रीडंतंदक्षिणानलेभ्यःप्रचलिताःप्रसरिताः येमलयसंबंधिनोमालत्यादयःतेषांयःपरिमलोतस्यमीलनमेकीभावःतेनत्वं
नितायुक्ताःयाःकावेर्यादिनद्यस्तासांसांद्राःगभीराश्चयानीरधारास्तासांतरंगैःपरिपीतामैत्रावरुणस्यागस्त्यस्यतरुणीकांतासाच
लंकापर्यंतदेशविशेषाणांकाभिन्यश्चतासांनीरंध्रपीनस्तनादिभारांतरालेषुअधिष्ठितोयःश्रीखंडादिसंभूतयक्षकर्दमःतेनविमर्दः
संमर्दःतस्माद्विवर्द्धितोयोविविधगंधश्चासौकुसुमानांबहुपरिमलश्चतयोःसमुद्गारीप्रक्षेपकोयःमारुतएवाशनंभोजनंयस्य
सचासौउत्थितःअधोदयश्चासौक्षीरनीहारकाश्मीरस्फटिकशुक्लशंखकर्पूरकुंदावदातःश्वेतोज्वलश्चासौमहाभुजंगश्चतस्य-
स्फीताःयेफूत्काराःतैःप्रफुल्लायाफणातस्याःमणौशिखरेक्रीडंतम् ३० कोलस्यवराहस्यकपोलस्थलसंस्थितोस्कंधमवलंबितः

काकःकपोलस्थलसंस्थितोमेकोलस्यवामेव्यसनंसदौस्थ्यं राज्यंभुजंगस्यफणाधिरूढोप्यनन्तस्यहोदक्षिणखं
जरीटः ३१ क्षणंविचिंत्यविश्राम्यवसबाष्पम् भोभोभुजंगतरुपल्लवलोलजिव्ह बंधूकपुष्पवरशोभितपुष्करा
क्ष पृच्छामितेपवनभोजनकोमलांगीकाचित्त्वयाशरदचंद्रमुखीनदृष्टा ३२ भुजंगमःस्फवाणीकथयतिग
तागताचंपकपुष्पवर्णापीनस्तनीकुंकुमचर्चितांगी आकाशगंगेवसुशीतलांगीनसन्नमध्येइवचंद्ररेखा ३३ रा
मः व्यसनंकिमतोप्यास्तेज्ञातश्चाभ्युदयोमम शरणंमरणंराज्यंमाप्नुनलक्ष्मणेस्फुनत् ३४ ७ ७

सदौस्थ्यंसमनोनवस्थानंअहोएतदाश्चर्यमेकदैवार्थद्वयस्सूचकशकुनत्वात् दुःस्थितस्यभावोदौःस्थ्यंतेनसहवर्तमानं ३१ ३२ ३३
ममाभ्युदयोज्ञातएवउपस्थितराज्यभंगात् तर्हिदुःखंभवतुनत्राह अतःसीतावियोगादपिअधिकंव्यसनंकिमास्तेनकिमपीतिम
मतुमरणमेवशरणंचेत्पुनःराज्यंस्यात् तर्हिलक्ष्मणेअस्फुटव्यसनंलक्ष्मणेमास्तु ३४ ७ ७ ७

वामंअशऋभस्सूचकंकाकंदक्षिणंशऋभसूचकंखंजरीटंमहारण्यमरण्यानीत्यमरः ततोवनांतरेभ्रमन्किष्किंधामधिश्रित्य ३५ किष्किंधागुह्य
तद्युक्तोद्रिःकिंष्किंधाद्रिःतत्ररौद्ररसाश्रयोरौद्रःएतादृशोयोरुद्रः तदवतारम् भोमारुतेकेनचित्पापेनसीतानीतात्वयाएतच्छ्रुत्वात्वष्टःयातरो
षःहनूमान्रामंकष्टंसंपरिहरन्नाह ३६ पापेनेति किष्किंधाद्रौ आंजनेयोहनूमानितितान्याभरणानिरघुपतिपुरः विक्षेपतानिकानीत्या

ततोवामंतिरस्कृत्यपुरस्कृत्यचदक्षिणम् धन्योवन्यशरण्यांतामरण्यानींसमगाहत ३५ किंच किष्किंधाद्रौ
रौद्ररुद्रावतारंदृष्ट्वारामोमारुतिंवाचमूचे सीतानीताकेनचित्क्वापिदृष्टात्वष्टःकष्टंसंहरन्प्राहवीरः ३६ पाप
नाकृष्यमाणारजनिचरवरेणांबरेपाव्रजंतीकिष्किंधाद्रौसुमोचप्रचुरमणिगणैर्भूषणान्यर्चितानि हारामस्रा
पनार्थेत्यहहृज हि रिपुंलक्ष्मणेनालपंतीयानीमानीतितानिक्षिपतिरघुपुरःकापिरामांजनेयः ३७ रामः स-
करुणंसबाष्पम् जानक्याएवजानाभिभूषणानीतिनान्यथा वत्सलक्ष्मणजानीषेपश्यत्वमपितत्वतः ३८
लक्ष्मणःसबाष्पम् कुंडलेनैवजानामिनैवजानामिकंकणे नूपुरावेवजानामिनित्यंपादाभिवंदनात् ३९ रा
मः आभरणानिहृदयेविन्यस्यगाढमालिंग्य सर्वेषुसत्स्वपितवाभरणेषुहारोनारोपितोहृदिचिरंत्वदुपगतो
पिमुक्तार्थसूत्रगुणवेधविशुद्धराशिस्तत्पंक्तिभेदफलदारुणमित्यरोदीत् ४०

ह अंबरेणआकाशमार्गेणआकृष्य
माणाकापिरामायानिकिष्किंधाद्रौसुमोच ३७ अन्यथासंदेहंतत्वतःसीतायाःसंतिनवेति ३८ ३९ तावन्मात्रांतरासहत्वान्नार्पितःकी
दृशोहारःमुक्तार्थंमौक्तिकार्थंयःसूत्रगुणोदोरकः तद्युक्ताःयेवेधकाःछिद्राणितत्रविशुद्धासारत्नराशिःसमूहोयस्यसः अतएवदुःखपंक्ति
भेदफलेनदारुणंदुःखिरुरोदेत्यर्थः ४०

पुनरपिस्वजीवनेपिविचिकित्सति अहहेतिखेदेहेपवनसूनोमेममपरमहंसःपरमात्माजीवएवहंसः एतद्देहंविहायनव्रजतितत्किंग
मनेहेतुमाहजनकपुत्रीति सोंततःत्वदूत्तभूषणैस्तंभितःउतअथवागंतुमक्षमः तत्रहेतुमाहतदुरुविरहेति ४१ तमपिविश्वजयिनंस
लोकंलंकावासिराक्षससहितम् कपिपतेःसुग्रीवस्यरावणस्तहनिष्यतएव अथवातावत्त्वंसुग्रीवस्यावतरणंअवतीर्यनेयास्मिन्नित्यवत
रणंवासस्थानंगिरिंपादविन्यासलक्ष्मीनिक्षेपात्सार्थंविधेहीतिकीदृशंगिरिंदर्शनात्तूलदवलोकनादिवनिरस्तशत्रुपक्षं ४२ रामेणस

अहहजनकपुत्रीवक्त्रमुद्रामपश्यन्व्रजतिपरमहंसोनाक्षमोवापिगंतुम् तदुरुविरहवह्निज्वालयादग्धदे
हःकिमुतपवनसूनोभूषणैस्तंभितोमे ४१ हनुमान्सानुनयं श्रीरामक्षोणिपालत्यजनिजदयिताशोकमेकः
सलोकंलंकेशंजेतुमीशोनमपिकपिपतेराज्ञयाहंहनूमान् सुग्रीवस्याथसार्द्धंगिरिमवनरणंपादविन्यासलक्ष्मी
निक्षेपादुत्पलाक्षक्षपितरिपुबलंदर्शनंत्वंचदेहि ४२ ततोहनूमान्सहलक्ष्मणेनरामेणसुग्रीवपुरस्थितोभू
त् सुग्रीवः तान्तत्रसाक्षात्कपियूथनाथःपापानिदग्धुंदहनान्ददर्श ४३ श्रुत्वारास्यकांताहरणमनिलज-
स्याननाद्वानरेंद्रोनिश्वस्यात्मीयमस्यानुवदतिपुरतस्तद्बलाद्वालिनोपि हानाथेविद्यमानेकिमिनिरघुपतिस्तं
निहंतुंप्रतिज्ञामारूढःप्रौढरोषानलबहलकलालक्ष्माधिज्यधन्वा ४४ छ छ छ छ

हर्षाद्दर्शनेनरामेणसहलक्ष्मणेनलक्ष्मणासहितेनेत्यर्थः तान्हनूमद्रामलक्ष्मणान्दहनान्दक्षिणाग्निगार्हपत्याहवनीयान् ४३
श्रुत्वेतिवानरेंद्रःसुग्रीवःअस्यरामस्यपुरतोग्रेबलादेववालिनःसकाशात्तस्मसिद्धमात्मीयजायाहरणश्रवणंलक्षीकृत्यवदतिरघु
पतिः तंवालिनंइतिकिंकांतापहरणदुःखानुभवज्ञत्वात्अन्यस्त्वगमं ४४ छ छ छ

ह॰ना॰
३१

अं॰
५

नलेति ससंभ्रमं सादरं विस्मृतं चिरवियोगात् तत्प्रियाया आलिंगने कृतप्रतिज्ञे रामे द्रुतभाविनी शीघ्रभाविनीषु अन्यत्सुगमं ४५
ये चत्वारो राम भरत लक्ष्मण शत्रुघ्नाख्याः राजपुत्राः दशरथसुता जज्ञिरे तेषां चतुर्णां मध्ये रामः ताटकैव कालरात्रिः तस्याः प्रत्यूषोयं
रामः त्वद्वंताघृभिसर्थः ननु स्त्रीवधात् सागाः किन्नेत्याह अमल इति अमलत्वे हेतुः सुचरितं पुण्यं यश्च रितं तस्य कथा नानाविनोदप
रिहारवाक्यैर्गुणकथा सैव कंदली तस्याः मूलस्यापि कंदः प्रसरणशीलानि मूलानि तन्निदानमध्योग्रंथिः कंदः यथाच्छिन्नापि कदली उ

सुग्रीवः नत्वा ससंभ्रममथो जगदेकवीरमालिंगयन् रघुपतिं शक्रभेकपींद्रः तद्विस्मृतं पुनरिवाप्य सते-
प्रियायाः कंदर्पकेलिषु पुनर्द्रुतभाविनीषु ४५ अयमरुत्तनयको स्तो चतुर्णां ताटकांतकः मारुतिः ये चत्वा
रो दिनकरकुलक्षत्रसंतानवल्लीमालाम्लानस्तबकमधुपा जज्ञिरे राजपुत्राः रामस्तेषामभवदमलस्ताट-
काकालरात्रिः प्रत्यूषोयं सुचरितकथाकंदलीमूलकंदः ४६ ततस्ततः श्रुत्वा बाली तदनु महतीं राघव
स्य प्रतिज्ञां तालान्से समप्रकृतिकुटिलान्प्रेरयामास योद्धुम् सौमित्रिस्तान्कृतसरलांच्छेषपृष्ठस्थमू
लान् भारेणांघ्रेरथ रघुपतिः संदधे दिव्यमस्त्रम् ४७ छिद्यते एवमाच्छिन्नोपि धर्मः यतः पुनः पुनरुत्पद्यते सर्वे की

दृशा इत्यपेक्षायामाह दिनं करोतीति दिनकरस्तस्य कुले जातानां क्षत्रियाणां संतान एव वल्ली तस्या माला परंपरा तस्याः अम्लानस्तबकाः
पुष्पगुच्छाः तेषां मधुपाः रविवंशक्षत्रियप्रशोवतंस मधुपा इत्यर्थः ४६ अनेयानां हननकर्तृत्वान्महतीमित्युक्तं तालांस्तालवृक्षांतर्गर्भिदे
त्यानेव सौमित्रिः अंघ्रेर्भारेण चरणांगुष्ठाविष्कृतभूभारेण सरलान्कृत अत्र हेतुः शेषपृष्ठस्थानि मूलानि येषां तेतान् एतेनैव मुकुंभपति कुंड
लीभूतदेहशेषपृष्ठस्य मूलत्वात् तेपि प्रकृतिकुटिला इति कार्यं निदानात्त्रिगुणं विचेद् इत्युक्तत्वात् चरणभारेण शेषशिरः समाक्रमणात्सरल
तथा वृक्षा अपि सरला जाता इति सूचितं सुगमम् ४७

अन्यथा एकदैवसप्तानामपि हननाभावे तत्रापि एकेनैव बाणेन एकेन ४८ भयं सत्तां देहं त्यक्त्वा सतां देहं निर्जगामेति अतः परदारहरणत्वाद्वाली असंस्तत्र भयमिति भावः ४९ द्विजैः कृतायामेनिरस्कृतिस्तया योरोषः तेनहीनः यद्वा द्विजानां तिरस्कृतिस्तेषु रोषश्च तद्रहितः ५० रूगमं एते भयभृतः आसन्नित्यन्वयः तानाह अश्वारवेः सप्तगाः सप्तद्वीपाः गकारो गगनद्वीपगणेषु च गणोपि चेन्ति संसाराव

लक्ष्मणः साशंकं रामं प्रति देव ज्ञात्वा बाणः प्रहर्तव्यः यतः एकदैव शरेणैकेनैव भिन्नकलेवराः म्रियंते सप्ततालास्तेभ्रंतिहंतारमन्यथा ४८ रामः सावज्ञं माभैषीर्मयि सौमित्रे राघवे धिज्यधन्वनि सत्तां देहं परित्यज्य निर्जगामासतां भयम् ४९ रामः करेण बाणमालभ्य भावोस्ति चेत्कुशिकनंदनपादयोर्मे यद्यस्म्यहं द्विजतिरस्कृतिरोषहीनः नान्यांगनास्कृच्च मनः शरसप्ततालान् भित्वा तदा प्रविश भूतलमप्यगाधम् ५० एकेनैव शरेण बालकदलीकांडप्रभंगक्रमात्कृत्तेषु प्रथमेषु दाशरथिना तालेषु सप्तस्वथ अश्वाः सप्त जगंति सप्त मुनयः सप्ताब्धयः सप्तगाः सत्यं सप्त च मातरो भयभृतः संख्यानसाम्यादिह ५१ रामबाणः सक्षोभम् बाणः प्रमाणमधिगम्य वसुंधरायाः संबोधयन्निव भुजंगमभंगभीत्या ब्रह्माणमंबरचरान्विधुनोति पक्षान्पुंखावशेष इति रामकराद्विमुक्तः ५२ पौरंदरिः सक्रोधं श्रुत्वा हतान्समरमूर्धनि सप्ततालान् रामेण पापपरहृदयेन विनापराधम् कोपानलज्वलितहृत्कमलोथ वाली रंगावतारमगमद्गिरिचत्वरेषु ५३

र्नशाब्दशासनः ५१ रामकराद्विमुक्तो बाणः पुंखावशेषः सन्
इति पक्षान्विधुनोति कंपयतीति किं भुजंगमः शेषस्तद्भंगभयेन अंबरस्वरं ब्रह्माणं बोधयन्निव ५२ विनापराधं हननमेव पापं तद्युक्तहृदयेन परकांता
पहरणत्वं वानराणामदोषत्वात् यद्वा पापो स्त्रीक्रोधकंपयोरिति विश्वात् क्रोधयुक्तहृदयेनेत्यर्थः ५३

तारेतिचिंतयामासेतिपूर्वेणान्वयः इतिकिंअस्यवालिनःप्राणान्हरतुकलिकलाकलेरंशःपापंतेनराजमानस्यकिलेतिपाठेवानरजात्यनुक
रणः किलकिलशब्दःकीदृशीतारास्त्रस्तःधम्मिल्लोकेशबंधनंयस्याःनरोरामस्तस्यैषानारारामस्यबाणाधारेत्यर्थः ५४ हेवत्सएषःवालीके
नायुधेनयोद्धव्यः यद्वाकेनवीरेणयोद्धव्यःनकेनापीतिध्वनिःएषःकःवानरपंक्तीनांबहलोयोकल्कलः शब्दःतेनचाहूतोदेवेंद्रस्तस्यवज्र
माकृष्यआदाययोद्धुंवांच्छतिशिवशिवेतिखेदेकीदृगयंतुमुलोन्यैरलक्ष्यःउत्कालःकदनंतेनसंचालितोर्कोयेनकिंभूतंवज्रंप्रकर्षेणोद्यं

तारासहर्षअवश्यंभगवतः श्रीपुरुषोत्तमस्यरामचंद्रस्यप्रसादादद्यचिरविरहिणःप्राणवल्लभस्यसुग्रीवस्यव
क्षःपीठेलुठिष्यामीतिमन्यमानागिरिवरशिखरमारुह्यरामपौरंदरिसमरमाकांक्षतीचिंतयामास तारासंत्य
क्तहारागिरिशिखरसंचरास्त्रस्तधम्मिल्लभाराशोकाब्धिप्राप्तपारार्पितमदनशरावीरसुग्रीवदाराःनारानाराच
धारानिजरमणरतातापिनःपापिनोस्यप्राणांश्छाणावतीर्णाहरतुकलिकलाशालिनोवालिनोद्य ५४ रामःस
क्षोभंपौरंदरिं गिरिगरिमगंभीरमहिमानमवलोक्य सौमित्रिमनुस्मृत्याब्रवीत् वत्स किंवालीवानरालीबह
लकलकलाहूतदेवेंद्रवज्रंवांच्छत्याकृष्ययोत्कंशिवशिवतुमुलोत्कालसंचालितार्कः प्रोद्यल्लांगूलवल्लीशिखर
कवलितंचंडदोर्दंडकोडक्रांतामूलाग्रशैलप्रहरणनिपुणःकेनयोद्धव्यएषः ५५ ७ ७ ७

तीयालांगूलवल्लीतस्याः शिखरेणाग्रभागेनकवलितंगृहीतंकिंभूतोवालीचंडः अजेयःदोर्दंडोभुजदंडस्तस्मिन्यः कोदंडोबाणः-
तेनक्रांतोगर्वितः दोर्दंडस्थबाणेनजातगर्वइति गर्वसंशययोःभ्रमइति विश्वःमूलंचाग्रंचमूलाग्रेताभ्यांयुतःशैलःमूलाग्रशैल
स्तेनयत्प्रहरणंतत्रनिपुणः ५५ ५ ७ ७ ७

हेबाणपुराद्विजगणेन वेदोद्भवैर्मंत्रैः गुणेनसमंत्वंमूर्धाभिषिक्तोसि अतस्त्वत्तेजसातेषांमंत्राणांतेजसासफलमम् ५६ अयेतिप्राप्तं
वीरस्यवालिनःप्रकर्षेणमानमियत्तायेनसः नविहतः पितुरिंद्रस्यशत्रुः रावणोयेनसः अतएवसशल्योरावणहननमेवशल्यम् ५७
भोकपेयःरावणापत्यंमेघनादः शस्त्रौघप्रसरेणशस्त्राघाताडंबरेणअखंडलमिंद्रंदुर्यशोभागिनंचक्रेरावणिनाशक्रोजितइतिदुर्यशः हेवी
रतत्इंद्रगतंदुर्यशोत्वयासंमृष्टंउज्वलीकृतंदूरीकृतमितिभावः कथंदूरीकृतमित्यपेक्षायामाहकिंभूतेनत्वयारावणंमेघनादपितरंक

रामः सावष्टंभंनारायणंबाणमादाय वेदोद्भवैर्द्विजगणेनपुराभिषिक्तोमूर्ध्नासिमंत्वमपिबाणगुणेनमैत्रैः तत्तेजसा
परवधूजनहारिणस्त्वंप्राणान्गृहाणसमरेध्वनिदारुणास्य ५६ रामबाणः पौरंदरिश्चब्रह्मतेजोधिगम्यपरदारापहरण
पराभवंच अथरघुपतिबाणःप्राप्तवीरःप्रमाणःप्रलयदहनरोचिःकोटिविद्युन्मरीचिः अकृतहृदयभेदंवालिनःसौप्य
रोदीदनिहतपितृशत्रुःकिंसशल्योहतोस्मि ५७ रामः सकरुणंसविषादंचवत्ससौमित्रेगिरिगह्वरेषुस्वयोनिविहितं-
महत्सुखमनुभवतंमहावीरंअनपराधिनंवालिनंहत्वामंदभाग्यः कथमहंजानकीसुखमनुभविष्यामीतिशिरोधुन्व
न्पौरंदरिंव्याजहार शस्त्रौघप्रसरेणरावणिरसौयोदुर्यशोभागिनंचक्रेगौतमशापयंत्रितभुजस्थेमानमाखंडलम् क
क्षागर्तकुलीरतांगमयतावीरत्वयारावणंतत्संमृष्टमहोविशल्यकरणीजागर्तिसत्पुत्रता ५८ क्षैवगर्तस्तत्रकुलीरतांकर्क

टतांगमयताकीदृशमिंद्रंगौतमशापेनयंत्रितःबद्धःभुजस्थेमाभुजबलंयस्यतंप्राणस्थेमानरःपराक्रमद्युम्नानिशौर्योजसीतिहैमः नन्वता
तदुर्यशःसंमृष्टंममतुरावणहननरूपंशल्यमस्त्येवेतिचेन्नअसौसत्पुत्रभाववानंगदःजागर्तिजीवत्येवकीदृशीविशल्यंकर्तुंशीलंयस्याः
साअयमंगदोरावणंमत्सहायतयाहनिष्यतिएनेनत्वंविशल्योभवेतिभावः रावणपुत्रेणत्वसितेंद्रोबद्धः इंद्रपुत्रेणत्वयारावणोबद्धः ए
तेनसादृश्यंजातंपरंतुत्वत्कृतेनरावणहननात्त्वानिशय इतिभावः ५८

५९ हे पुरंदरनंदनत्वेन यदि त्वं मां आहनिष्यसि तदा मम शुद्धिः मनः प्रसत्तिर्भविष्यति अस्मात्वद्धननापराधात् पुनर्जनकजा
विरहो मास्तु शयानं अंतर्निश्चितात् मीलिताक्षम् ६० ६१ ६२ आदौ राज्ये किंविधा दौ सुग्रीवं वानरराज्ये शंकां समुद्रं तीर्त्वा लंक-

वालीप्राणांस्त्यक्तुमिच्छन् सुग्रीवोपि क्षमः कर्तुं यत्कार्यं तव राघव किमहं न क्षमः कस्मादपराधं विनाहतः ५९
रामः सबाष्पम् शुद्धिर्भविष्यति पुरंदरनंदन त्वं मामेव चेदहह पातकिनं शयानम् सौख्याब्धिनं निरपराधिनमा
हनिष्यस्यस्मात्पुनर्जनकजाविरहोस्तु मामे ६० पौरंदरिः तथेत्युक्त्वा पुनः स्वर्ग्या गतिस्ते न भविष्यति यावत्त्वां न
हनिष्यामि स्थास्यसि त्वं यमालये ६१ इति प्राणान्मुमोच हनूमान् दासैरहो रघुपतिः परिभूयते किं वैवस्वतादिभि
रुवास न तदालयेपि यो देववाक्यमनतिक्रमयन् क्रियंतं कालं निहत्य पुरुहूतसुतं तु देवः ६२ रामः कथंचिद्विषादं परि
त्यज्य पौरुषमवलंब्य राज्ये सुग्रीवमादौ सदयितमभिषिच्य अंगदं यौवराज्ये रामः सेनाधिपत्ये सपवनतनयान्वा
नरेंद्रान्प्रतस्थे लंकां संत्यज्य शंकां तदनु कपिभटैर्माल्यवत्सुत्तमाद्रौ वर्षाकालं गमयितुमचिरान्मंत्रिभिः संमतो
भूत् ६३ रामात्परः शूरनरो न कश्चित्सरो भवः स्त्रीहरणान्नचान्यः तथापि नाब्धिं प्रविवेश रामो बबंध सेतुं विज
यासहिष्णुः ६४ अप्रि चिरामाद्बलीयान्नपरोत्र कश्चिद्द्वारापहारान्न परोभिमानः तथापि रामः शरदं प्रतीक्ष्य बध्वा
बुधौ सेतुमरिं जगाम ६५

थं यास्यामीति भयं त्यक्त्वा लंकां प्रतस्थे तदनु प्रस्थानघोषानंतरं मंत्रिभिः कपि
भटैः वर्षाकालं गमयितुं संमतः अभूत् वर्षाकालं गमयिता यास्यामः इति निश्चितवान् एतेन नीतिशास्त्रपराणां प्राधान्यं संदर्शितम् ६३,६४,६५,

प्रकर्षेणम्लानः अरुणः शोणत्वं यस्मिन्तं कलयापि सीता स्वरलेशो नापि अत्र सर्वमंगसादृश्यं एतेनगुणकीर्तनावस्थोक्ता सोत्क
रसौदधौ वैरह कांताविषयकप्रशंसनंस्यात् गुणाख्यानमिति ६६ यदिंदीवरंत्वन्नेत्रसमानकांति नदपिसलिलेमग्नं यः
नवसुखच्छायानुकारी सोपि शशी मेघैरंतरितः राजहंसा अपिगताः वर्षाकाले कमलाभावात् सुगमं प्रलापावस्थेयं सोत्कार

रामस्तत्र जनकतनयाकमनीयतामनुस्मृत्य इंदुर्लिप्त इवांजनेन गलिना दृष्टिर्मृगीणामिव प्रम्लानारुण
मेवविद्रुमदलं श्याममेव हेमप्रभा पारुष्यंकलयाच कोकिलवधूकंठेष्विव प्रस्तुतम् सीतायाः पुरतश्च हंत शि
खिनां बर्हाः सगर्हाइव ६६ रामः कादंबिनी तांडवाडंबरं विलोक्य यत्त्वन्नेत्रसमानकांति सलिले मग्नं तदिंदी
वरं मेघैरंतरितः प्रिये नव सुखच्छायानुकारी शशी येपि त्वद्गमनानुकारि गनयस्ते राजहंसा गतास्त्वत्सादृश्यवि
नोदमात्रमपि मे दैवेन न क्षम्यते ६७ इतिश्री हनुमद्विरचिते महानाटके वालिवधो नाम पंचमोऽंकः ५
रामः वानरभटानां चेष्टेप्रभो मोस्कप्रवास सैनिकाः शृणुत व्यसने महति प्राप्ते स्थिरैः स्यात्तु न युज्यते लंकां निः
शंकमालोक्य क इहागंतुमर्हति १ हनूमान् सहर्षं दोस्तंभास्फालनकेलिमभिनीय निजप्रचंडदोर्दंडयोर्मह
तीं प्रोदिनाटयति देव पश्य अष्टांगुलमयः कायः पुच्छे मे द्वादशांगुलः बाहू मे पश्य प्रभो नाथ कथं रत्नाकरांतरे २

सोदधौ कांताश्रितकालात्ययव्यवहारः स्यात्प्रलापोयम् ६७ इतिश्री मिश्रमोहनदासविरचितायां हनुमन्नाटकटीका
यां वालिवधो नाम पंचमोऽंकः ५ स्थिरैर्योगिभिरपि किंतु न गृहीभिः भवतां मध्ये कः आगंतुमर्हतीति १ २

हेस्वामिन्प्रभोअयंव्योमतरुः आकाशमेववृक्षः ममक्रमतलेअङ्घ्रिपादविन्यासोत्थापनात् नीचैरस्ति तमेववृक्षरूपत्वेननिरूपयति
कूर्मोमूलवदिति मूलस्थानीयः३ देवेतिजंबूद्वीपंसागरांतर्वर्तिद्वीपं इतःसकाशात् तत्रैवलंकासमीपएवआनयेप्रापयामिलंकापि
जंबुद्वीपांतरालएवेत्युक्तार्थेवैपदं एवंव्याक्रियतेजंबूयुक्तोद्वीपः मध्यमपदलोपीसमासः द्वीपशब्देनलक्ष्मणः शेषोजंबूध्वजोद्वी
पोपरोअयरवराडितितंत्रे जंबूद्वीपंलक्ष्मणंशेषत्वात् स्वर्णाचलोमेरुः त्रिनेत्राचलः कैलासः विंध्यादीनांक्षेपेणप्रक्षेपणेनक्षुण्णं
खंडितंविवर्तमानप्रसागरंअवरुधमानंसलिलंयस्यतंबध्नामिपर्वतैरेवस्थलीकरोमि ४ इत्युक्तेपिकिंकारयामीतिविचि

रामचंद्रःसविस्मयोबभूव ततोजांबवान्देवरुद्रावतारोयंमारुतिःरुद्रस्त्वतिःक्रियतांरामचंद्रोरुद्रस्त्वतिंकृ
त्वाप्रभोमारुतेत्वयाविहीनःकःकर्तुंसमर्थोस्ति तत्रहनूमान्महावीराद्भुतपराक्रमःसहर्षवाक्यंदेवाकर्ण्य
कूर्मोमूलवदालवालवदपांनाथोलतावद्दिशामेघाःपल्लववत्प्रसूनफलवन्नक्षत्रसूर्येदवः स्वामिन्व्योमतरुर्म
मक्रमतलेश्रुत्वेतिगोमारुतेः सीतान्वेषणमादिशन्दिशतुवोरामःसहर्षःश्रियम् ३ देवाज्ञापयकिंकरोमिसहसालं
कामिहैवानयेजंबूद्वीपमितोनयेकिमथवावारांनिधिंशोषये हेलोत्पाटितविंध्यमंदरगिरिस्वर्णत्रिनेत्राचलक्षेपक्ष
पणविवर्तमानसलिलंबध्नामिवारांनिधिम् ४ अपिच देवाज्ञांदेहिराज्ञांत्वमसिकुलगुरुःशोषयेकिंपयोधिंकिंवालं
कांसलंकाधिपतिमुपनयेजानकीमानकीर्णाम् सेतुंबध्नामिमत्तःस्फुटितगिरितटीभूतभंगात्तरंगाद्भ्राम्यन्नक्र
चक्रंमकरकुलग्रहग्राहचीत्कारघोरं ५ कित्समानःपुनरात्मबलमुक्तार्थानुवादेनैवस्मारयतिदेवाज्ञामितिद्वाभ्यां अलंका
लंकैवनास्तीत्येवंचूर्णीकरोमीतिशेषः अथवामानकीर्णापातिव्रत्योन्नतिमतींजानकीमुपनयेसेतुंबध्नामिकिंभूतंसेतुंमत्तःसकाशात्

अं॰
६

२४

स्फुटितायेगिरयः तेषांनदीभिः भूतानांभंगोयत्रनस्मात्तरंगादुच्चैः भ्रमंतोयेनक्रास्तेषांचक्राणांसमूहानांक्रमादुत्फालामकरग्रह
ग्राहचीत्कारैश्च घोरंनक्राःसपक्षजातियामकरास्फश्चतुष्पदाः एतद्भिलाग्रहाग्राहास्तद्भिलाःसमुदीरिताः इतिवैद्यके यद्वाकिंवि
शिष्टान्मत्तः स्फुटितायेगिरयस्तेषांनदीभिर्येभूतभंगाःप्राणिनाशास्तैरात्तःस्वीकृतोरंगोयेनतस्मात् ५ सैन्येनसहसमुद्धृत्तंनत्रै
वलंकायांसैन्येनसहसम्यगुद्धृत्तंसर्वसंपादयेव्यापादयेहन्मिसकलपर्वतादिकंस्रगमं ६ रामःशीघ्रंरावणंहत्वानेष्यतीतिवचभाश्वास्यतस्याः

अथकिंप्राकारविहारतोरणवतींलंकामिहैवानयेकिंवासैन्यसमुद्धृत्तंचसकलंतत्रैवसंपादये हेलांदोलितपर्वतोच्च
शिखरैर्बध्नामिवारांनिधिंदेवाज्ञापयकिंकरोमिसकलंदोर्दंडसाध्यंमम ६ रामः सत्वरंकरमुद्रांसमुद्धृत्यवीरमारु
ते मुद्रांसमुद्रमुल्लंघ्यशीघ्रमाश्वास्यजानकीं विन्यस्यपुरतस्तस्याआगच्छमयिजीवति ७ हनूमांस्तथेतिश्री
रामस्कन्धीवोप्रणम्यसमादायमुद्रांसमुद्रोपकंठंपीठावतारमासाद्यसद्योऽचिंतयन् एतेनेदुरतिक्रमाःक्रममि
लद्धूर्मोर्मिमर्मच्छिदःकादंबेनरजोभरेणककुभोरुंधंतिझंझानिलाः गाढाम्रेडनरूढनीरदघटासंघट्टनीलीभ
वद्व्योमास्फोटकटाहनिर्झरपयोवेणीकणग्राहिणः ८

पुरतोमुद्रांविन्यस्यमयिजीवतीति ७ एतेझंझानिलाः
झंझानामानोवायवः कदंबसंबंधिनारजोभरेणककुभोरुंधंत्याच्छादयंति किंभूताःदुरतिक्रमाःदुर्लंघ्याश्चतेक्रमेणैवमिलंतएकी
भवंतश्चतेघूर्णोर्मयश्चघूर्णायमाणतरंगास्तैरेवलोकानांमर्माणिछिंदंतिइतिपुनःकीदृशागाढाम्रेडनेनवातातिशयमेलने
नरूढाप्ररूढायानीरदघटातस्याःसंघट्टनेनसंयोगेननीलीभवत्श्यामीभूतंयद्व्योमतस्मिन्स्फोटनंतद्युक्तश्चासौकटाहश्चक
टाहोब्रह्मांडकटाहःतस्माद्यन्निर्झरत्पयःगंगातस्याःयावेणीप्रवाहस्तस्मादंबुकणान्गृहीतुंशीलंयेषांतेआम्रेडनोतियोगोरूढीतिविश्वः
८

उद्यल्लांगूलेति अथदुरलिक्रमणविचारानंतरंसहनूमान्जलनिधिंलंघितुंजांधिकत्वमंगीचकारेत्यन्वयः जंघालोतिजवोजंघाका
स्किोजांधिकोजवीतित्वरकःकः किमिवखगपतिर्गरुड:चंडोड्डीनमिवकीदृशंजलनिधिं विलसितांभस्तंभितस्तंभितमिभकाशोयेनतंज
लचराणांमत्स्यादीनांखरातीक्ष्णानिरंतरायाउरेखाक्रीडनंतत्रयेअस्फालाउत्पातास्तैर्वाचालिता:मुखरीकृताः आशादिशायेनतम्
९ हनूमानितिशेषः सिंदूरपूरारुणांदिग्वारणानांकटितटमभितः सर्वतस्तेजसः संविभागैःस्वांगदीप्तिसंचारिणैः सूर्यविंद्धां
बुदाभंसूर्येणविद्धस्यालिंगितस्यांबुदस्येवाभायस्यतादृशंचक्रेयथालग्नरविकरामेघादृश्यंतेतथादूरादेवलग्नांगदीप्तयःदिग्वार

धैर्यमवलंब्योद्यल्लांगूलास्फालकेलिव्याकुलीकृतांबरचरःसज्जोबभूव अथसविलसदंभःस्तंभिताक्षिप्तका
शंजलचरखरलेखास्फालवाचालिताशं जलनिधिमधिवीरोलंघितुंजांघिकत्वंखगपतिरिवचंडोड्डीनमंगीच
कार ९ लांगूलोत्तालकेतुर्नभसिपृथुगतिःस्फारसीमंतिताभ्रःस्फूर्जत्प्रौढोरुवेगोल्लुलितजलनिधिःपृष्ठकृष्टोग्रस
त्वःदूरात्सिंदूरपूरारुणमरुणरुचिस्तेजसःसंविभागैश्चक्रेदिग्वारणानांकटितटमभितःसूर्यविद्धांबुदाभम् १०

णाअभवन्नित्यर्थः सूर्यसादृश्येहेतुमाह अरुणरुचिः वानरजातित्वात् यद्वासमुद्रोल्लंघनाविष्कृतरोषावेशात्वाअरुणारु-
चिर्यस्यरोषमेवद्योतयति लांगूलमेवोत्तालःकेतुर्यस्यनभसियापृथुगतिः शीघ्रगमनंतदर्थंयःस्फारउत्पतनंतेनसीमंतिता
निर्द्विधाभूतानिअभ्राणियेनअभ्रंमेघोवारिवाहस्तनयित्नुर्बलाहकइत्यमरः स्फूर्जन्निर्गच्छन्यःप्रौढोऽतिबहुऊरुवेगःजंघा
जवस्तेनउल्लुलितःजलनिधिर्येनसःपृष्ठेनाकृष्टानिउग्राणिराक्षसादीनिसत्वानियेनसःसमुद्रलंघनेराक्षसयुद्धंप्रसिद्धम् १०

मैनाकोगिरिः कपिंमाह हंहोसंबोधनेव्ययम् हेहनुमन् त्वंदूरादागतः अतोममशिखरेदूराध्वखेदंजहीत्यन्वयः तस्यगिरेरितिवा
चंप्राप्यश्रुत्वाअंगुल्याचरणांगुल्यातदग्रंतच्छिखराग्रंस्पृष्ट्वाशुजरयपवनेनापूरिताआशाःयेनैवंयथास्यात्तथाजगामकीदृशोमैना
कःजलनिधिनासपदिहर्षात् मत्कर्तृसगरगोत्रापत्यरामसहायकृदयमितिमीत्याप्रेरितः ननुकुतस्तत्रगिरिरित्यपेक्षायामाह कीदृशो
गिरिः विश्रांतःपक्षच्छिदोगोत्रभिदःभयात्निलीयस्थितःअन्यत्स्फुगमं ११ आंजनेयः अंजनीपुत्रःहनूमान् सहसाअनायासेनक
ल्लोलिनीवल्लभंसमुद्रमुल्लुलंघेलंघितवान् वालधिःपुच्छंनदेववल्लीतामुल्लोलयन्उच्चैश्चालयन् १२ अ लोमूत्तालंकांप्रविशेति

तत्रावसरेसमुद्रादुत्थितोमैनाकः विश्रांतस्तत्रहर्षात्सपदिजलधिनाप्रेरितोरत्ननाभोमैनाकःकांचनांगस्त
द्गिनगिरिस्तत्रःप्राहदूरागतस्त्वम् हंहोदूराध्वखेदंजहिममशिखरेप्राप्यतस्येतिवाचंस्पृष्ट्वांगुल्यानदग्रंभुज
रयपवनापूरिताशंजगाम ११ वेलातटेशालतमालमालांविलोकयमानःसहसांजनेयः उल्लोलयन्वालधि
वल्लिमुच्चैःकल्लोलिनीवल्लभमुल्ललंघे १२ अथदशरथसूनोराज्ञयावायुपुत्रोरजनिचरपुरीमालोक्यभू
त्वाहिदंशः अकलितपरिमाणोमात्रयासत्रपस्तांक्षिपतिजनकजाग्रेशिंशिपाग्रावतीर्णः १३ जानकीन
मस्कृत्य मारुतिः मातर्जानकिकोभवानिहमृगःकेनात्रसंप्रेषितःत्वद्दोत्येनरघूत्तमेनकिमिदंहस्तेस्तितन्मुद्रिका
दत्तातेनतवैवतांनिजकरादालभ्यचालिंग्यचप्रेम्णाश्रूणिससर्जसम्यगुदभूद्गात्रेषुरोमोद्गमः १४ ७

रामाज्ञयाहिदंशप्रमाणदेहः हिदंशोवमनक्षिकेतिविश्वः मात्रयापरिमितदेहेनशिंशुपायात् अशोकाग्रादवतीर्णः समोस्त्तः शिंश
पाशोकावितिनिघंटः १३ मुद्रादानप्रकारमाह अत्राप्युक्तिप्रत्युक्तिः हनुमान्मातःजानकीसीता० भवान्कः हनू० मृगःवानरःसी-

ता अत्र केन संप्रेषितोसि हनूः घूत्तमेनत्वद्दौत्येन त्वद्दौत्यनिमित्तं सीता॰ इदं हस्ते किं ह॰ तन्मुद्रिकासीत्तेतेन तुभ्यं दत्तातवैवद
त्तेति परस्परमुत्का सीता तां मुद्रिकां निजकरादालभ्य गृहीत्वा आलिंग्य स्वहृदये विन्यस्य प्रेम्णा अश्रूणि ससर्ज सम्यक्स्पृष्टं यथा
स्यात्तथा गात्रे पुरोमोद्गमोऽभूदिति १४ हेभामिनि भ्रमवति भामो रुषौ भ्रम कोपयोरिति चरकः इदं स्वर्णस्य हेम्नः अंगुलीयकं

हनूमान् अविरलगलदश्रुपूर्णलोचनाभ्यामसौवर्णमंगुलीयकंमन्यमानांजानकीं संभावयामास हेभामि
नि स्वर्णस्यस्वर्णस्यस्वर्णस्यचमैथिलि प्रेषितंरामचंद्रेण सवर्णस्यांगुलीयकम् १५ जानकी आशा
लेशमासाद्यक्षणमश्रूणिप्रमृज्य मुद्रेसंतिसलक्ष्मणाःकुशलिनःश्रीरामपादाःस्वस्वंसंतिस्वामिनिमाविधे
हिविधुरंचेतोनयाचिंतया एनांव्याहरमैथिलाधिपस्तेनेनामांतरेणाधुनारामस्त्वद्विरहेपाकंकणपदंत्वस्यै
चिरंदत्तवान् १६ अत्रांगुलीयकमणौप्रतिबिंबमासीद्रामस्यसादरमतीवविलोकयंती मद्रूपएवकिमभू
न्ममवीक्षयेतिमीमांसयाजनकराजस्तुतासुमोह १७

रामेणतव तुभ्यं प्रेरितं प्रस्थापितम् किंभूतस्य स्वर्णस्य शो
भनपीनारक्तरंगवतः पुनः किंभूतस्यस्वर्णस्य शोभनरामनामाक्षरवतः पुनः सुवर्णस्य दशमाषमात्रस्य स्वर्णं दशमाषकमिति १५
मुद्रेतिपरपुरुषसंभाषणात्सानिवृत्य भंगभयान्मुद्रिकामुपन्यस्यपृच्छति मुद्रेति रामः अस्यैमुद्रायैचिरंत्वद्विरहेणकंकणपदंकं
कणस्थानंदत्तवान् एतेनव्याधिदर्शिनः उक्तंचरसोदधौ व्याधिस्मरवेदनयासमुत्थसंतापदोषतःकृशिमेतिस्मृगमम् १६ अत्रअं
गुलीयकमणौसादरंयथास्यात्तथा अतीवरामस्येतिकर्मणिषष्ठी रामंरामनामाक्षरं विलोकयंतीसीताप्रतिबिंबंआसीत् म
णौप्रतिबिंबिताबभूवेत्यर्थः यद्वा अत्रभ्रमः अत्रमणौरामस्यप्रतिबिंबमासीतदस्तिनवेतिपरीक्षयाविलोकयंतीस्वप्रतिबिं

बंतत्रसादृश्याविचिकित्सतिमद्रूपइति रामोपिमच्चिंतयामद्रूपएवाभूत् किमितिमीमांसयाविचारेणमुमोह वैचित्त्यमाप १७
हेतन्वंगिस्वभावादेवतनुतांगतः लंघियोगाद्विशेषतइत्यन्वयः तन्वंगीतिवापाठः तनूर्न्यंगानियस्यासौरामः स्वभावादेवल
ङ्घियोगाद्विशेषतस्तनुतांगतइतियोज्यम् तन्वंगीइत्यन्तः १८ चंद्रेति शंपाविद्युत् कारयेतिस्वार्थेणिचंकुर्वित्यर्थः तत्रगत्वाया
त्रांरामप्रस्थानंकारयेत्यर्थः १९ ननुससमुद्रांतरितरक्षोगृहमागताहंदूरस्थोरामइतिमीमांसमानांसंबोधयति अर्गलानिप्राकारादी

कथंचिच्चेतनांप्राप्य अयेमरुत्तनयप्रद्यंगुलीयकमेवकंकणमभूत्स्वामिनोरामदेवस्यतर्हिकिमिवतनुतां
गतः हनूमान् स्वभावादेवतन्वंगिलंघियोगाद्विशेषतः प्रतिपत्पाठशीलस्यविद्येवतनुतांगतः १८ जानकी
चंद्रोयत्रदिनेशदीधितिसमःपद्मं स्फुलिंगोपमंकर्पूरःकुलिशोपमःशशिकलाशंपासमाभासते वायुर्वाडव
वह्निवन्मलयजोदावाग्निवत्सांप्रतंसंदेशंनयरामसन्निधिमितोयात्राद्रुतंकारय १९ हनूमान् किंदूरमिंदु
मुखिरामशिलीमुखानांकिंदुर्गमर्गलभिदांहरियूथपानां देवंप्रसन्नमिवदेवितवाद्यसत्यंरक्षांसिकोनिकु
पितस्यसलक्ष्मणस्य २० अत्रांतरेजानकींसप्रपंचंपृच्छन्हनूमान् मातः कुत्रास्तेराजवाटिकादर्शयति
जानकी रेपुत्रपश्चिमदिग्भागेनास्यास्तिवाटिका हनूमानुद्यल्लांगूलप्रचंडरूपेणप्रचलितः इत्यक्षोर
जनीचरस्यहनुमानुद्भिद्यलीलावनंवीरंतत्क्षणमक्षमात्तपरिघाघातैर्जघानागतम् तत्कोपारुणलोचनेंद्र
जयिनाप्राङ्गिष्पलत्वाद्द्रुतंब्रह्मास्त्रेणविगर्हितेनविधिनाबद्धोविदग्धःकपिः २१ निर्भिंदंतीत्यर्गलभिदस्तेषां शो
षंस्फूगममम् २० उद्भिद्यउत्पाट्य तत्क्षणंरावणपुत्रं अक्षनामानंवनभंगंश्रुत्वायोद्धुमागतं तस्मिन्हनूमतियःकोपस्तेनारुणेलो

चनेयस्यतेनेंद्रजयिनामेघनादेनरुष्टात्मा इत्रिष्फलत्वाद्विगर्हितेनविधिनाब्रह्मणाहेतुभूतेनब्रह्मणाब्रह्मास्त्रेणब्रह्मदत्त
पाशेनबद्धः अत्रेयंकथापूर्वंब्रह्मणादत्तोब्रह्मपाशःएतेनत्वंकपिंबध्नीहीनिरुद्रावतारेहनूमतिपाशोनिष्फलोजातःततोमे
घनादेनब्रह्मणोगर्हाकृतातदाब्रह्मणाप्रार्थितोहनूमान्स्वयंनिबद्धः विदग्धः ब्रह्मसंकटात्महननिवारणविधिज्ञः २१ रेरेवान
रभवान्कः हेरावणअहंआहवेत्वत्सूनुर्हंताक्षघाती एतेनस्वतोबलउपादिश्यस्वामिनोप्यात्मनोबलंद्योतयति खरखंडन

रावणः तमालोक्य रेरेवानरकोभवानह मरेत्वत्सूनुहंताहवेदूतोहं खरखंडनस्यजगतांकोदंडदी
क्षागुरोः मद्दोर्दंडकठोरताडनविधौकोवात्रिकूटाचलः कोमेरुः क्वचरावणस्यगणनाकोटिस्तकीटायि
ते २२ ईषल्लज्जनमेत्रावनाभिघनकपेस्तनुः निहताचंद्रहासेनरावणेनातिरंहसा २३ लांगूलेचैल
तैलप्लुतबहलशणैर्वेष्टितेदीप्यमानोरक्षोभिर्विक्षिप्तोग्निर्द्विजपरुषगिरारावणेयधृतुष्टः तुष्टोयद्या
ज्यहोमैस्त्वमपिरघुपतेर्यद्यहंभक्तियुक्तासंतप्तःप्रार्थितोमानदिहहनुमतःशीतयाशीतलोभूत् २४

स्येत्युपलक्षणंखरदूषणात्रिशिरसांत्वद्भ्रातॄणांखंडनस्यहंतुःरामस्यदूतः किंभूतस्यरामस्य जगतोविश्वस्ययाकोदंडदीक्षाध
नुर्विद्याशिक्षणंतस्यगुरोः शिक्षकस्यमद्दोर्दंडाभ्यांयत्कठोरताडनंतस्यविधौसतिमयिप्रहरतिसतित्रिकूटादयःकेनकेपी
स्यर्थः २२ ईषदपिनोभिद्यतचंद्रहासाख्यखड्गेनतत्राप्यतिरंहसाअतिबलेन २३ खड्गेनिष्फलेआत्मनःपूर्वोक्तवैदग्ध्य
माविःकर्तुंमांदहेतिशिक्षितोरावणःदाहयतिसीतयाइतिप्रार्थितोऽग्निर्हनुमतः शीतलोभूत्नपरेषामितिइतिर्किं
भोअग्नेयदिसंतुष्टइत्यादिस्रग्धरा हनुमतःसंतप्तोमाप्रभवेतिशेषःतत्तदायदितुष्टोसि भोहुताशःअग्निःचैलादिवतिलांगूले
सतिदीपितःसुममम् २४

वन्हिर्लंकांविदल्यबभौकीदृशः खंउत्सर्पतिष्णुः उच्चैर्गंतुकः कइवखंप्रतिपलायमानदशकंधरप्रतापइव २५ पलाशिनांरक्षसांपला
निमांसानि चपलः शीघ्रदाहकःप्रतियातना प्रतिबिंबस्तन्मिषेण २६ हियतःपंक्तेर्भेदः भेदनंशिवायमंगलायनभवति स्फगमम्
सःप्रसिद्धः कपिःपुच्छेनसाग्निपुच्छेनखेराजतेनत्रकविरुत्प्रेक्षतेकेनकइवस्वर्वस्फगमं पुनर्मेघग्रहणंधनुरुत्प्रेक्षार्थंअलंकारद्

वन्हिर्बभौवानरपुच्छजन्मासंदह्यलंकांखमिवोत्सर्पतिष्णुः रामाद्भयंप्राप्यकिलःप्रतापःपलायमानोदशकंधरस्य
२५ पलानिभुक्त्वाचपलःपलाशिनांहुताशनस्तृप्तिमुपागतःपरां विराजतेस्मप्रतियातनच्छलाज्जलानिचाब्धौ
तृषितःपिबन्निव २६ रावणःस्वगतंयद्ययंरुद्रोमारुतिस्तर्हिकिमितिरुद्रभक्तस्यमेनगरींदहति अहह्ज्ञातं
तुष्टःपिनाकीदशभिःशिरोभिःस्तुष्टोनचैकादशमोहिरुद्रः अतोहनूमान्दहतीतिकोपात्पंक्तेर्हिभेदोनपुनःशि
वाय २७ अपिच अब्धिःकिंवडवानलेनतरणेर्बिंबेनकिंवांबरंमेघः किंचपलाचयेनशाशिभृत्किंभालनेत्रे
णवा कालःकिंक्षयवन्हिनेंद्रधनुषाधाराधरःकिंमहान्मेरुःकिंध्रुवमंडलेनसकपिःपुच्छेनखेराजते २८ अ
थराक्षसाः मरुत्पुत्र स्त्वेकःकपिकटकरक्षामणिरसौसमुद्यल्लांगूलोध्वजइवसमाश्लिष्टगगनःपुनःप्रत्याया
स्यसहहकपिसैन्यप्रचलितेपदंप्रोचुर्नीचैर्भयचकितलंकापुरजनाः २९ पितमिदंपद्यंनदुक्तंदंडिना असंबद्धोपमं
पद्यंनकुर्वीतविदूषितमिति २८ लंकापुरवासिनोराक्षसाः नीचैर्मंदमंदमितिप्रोचुः इतीतिशेषःइतिकिं अहहेतिकष्टं ततःकपिसैन्ये
प्रचलतिसतिमरुत्पुत्रोहनूमान्पुनःपदंअस्मदीयंस्थानंलंकांप्रत्यायास्यति आगमिष्यति यद्वा पदंवचनंकीदृशः एकएवासौकपिकटक
रक्षामणिःयद्वाएकःअसहायः असौमरुत्पुत्रःपुनरायास्यतीतियोज्यम् पुनः समुद्यल्लांगूलः उर्ध्वगतपुच्छः कइवपुच्छःसमाश्लि
ष्टगगनध्वजइव २९

पूर्वार्द्धं स्पष्टमन्यत् सुगमम् शक्तश्चेत्कथं मां न हन्याः सीतां चानयेः न सत्यमाह पुरा पूर्वं रामेण सुग्रीवतः स्वग्रीवाग्रे सुग्रीवं प्रति त्वां हंतुं वचनमुक्तं यत्त
द्वचः अनृतं स्यात् तेन न हन्मीति भावः ३० अन्यत्स्पष्टं रक्षितां अग्निना अदग्धां शिखां वेणीमुद्यम्य कीदृशीं धूमशिखां धूमस्येव शिखा यस्या
स्तां मध्यमपदलोपी समासः रावणदाहार्थमलयाग्निधूमशिखामिवेत्यर्थः यद्वा धूमस्य धूमकेतोः शिखामिव कालसर्पस्य स्त्रियमिव

अथाह गगनमंडलस्थो मारुतिः एकोऽहं पवनात्मजो दशमुखं त्वं चापि कोटीश्वरस्त्वां जित्वा समरे प्रभोः प्रणयिनीं
सीतां चानेतुं क्षमः किंतु स्थाय प्रतिज्ञं पुरा भगवता रामेण सुग्रीवतो हत्वा दक्षिणपाणिना वक्षमतीं त्वां हंतुमुक्तं त्वः
३० इत्युक्त्वा दशग्रीवनगरीं भस्मसात्कृत्वा रक्षितामशोकवनिकामागम्य जानकीं प्रणम्य रामाभिज्ञानं याचते स्म
हनूमान् मैथिली शिखां धूमशिखां शत्रोः कालव्यालवधूमिव उद्यम्यास्य शिरोरत्नं संज्ञानं स्वामिनं ददौ ३१ तथा
च चित्रकूटपर्वते वक्षोऽभिचारि चरुभांडमिव स्तनं यो देव्या विदेहदुहितुर्विददार काकः ऐषीकमस्त्रमधिकृत्य
तदा नतो क्ष्णाकाणं चकार करुणो रघुराजपुत्रः ३२ इति द्वितीयमभिज्ञानम् मनःशिलायास्तिलकं त्वया मे गंड
स्थले पाणितलेन मृष्टम् स्मरेति संज्ञानमपि प्रयच्छ जीवाम्यतो राघव मासमात्रम् ३३

३१ यदा चित्रकूटे यः काकः
काकरूपधरश्चेंद्रः वक्षोऽभिचारि यथा स्यात्तथा वक्षसि अभिचरतीति वक्षोऽभिचारि देव्याः स्तनं विददार तदा च रामः रघुराजपुत्रः
ऐषीकं बाणमधिकृत्य तं काकं अक्ष्णा नेत्रेण काणं चकारेति किमिव चरुभांडमिव हविःपात्रमिव ३२ हे राघव अहं त्वदागमना
यमासमात्रं कालं जीवामीत्यपि वाच्यम् इति शेषः अन्यत्सुगमम् ३३ ५ ५ ५

पाणिभ्यामंघ्रियुग्मम् पुनः उदधितटे मंत्रयित्वा अभ्राणि गर्भे यस्य तेनाकाशमार्गेण जगामेत्यन्वयः किंकृत्वा ऊर्म्यां समुद्रोर्मिमभिव्या
प्य तन्मानं समुद्रप्रमाणं उत्पत्य समुद्रोर्मिप्रमाणमात्रमुत्पत्येत्यर्थः किंविशिष्टेनाभ्रमार्गेण उरुभुजबलस्याडंबरो यस्मिन् अन्यत्सुग
मम् ३४ अत्र हनूमद्वसंतयोर्वर्णनम् मरुच्चुंबितचारुकेसरः चारुकेसराः पुच्छलोमानि कुसुमकोशान्तंतवो वा ताराधिपः सुग्री

तृतीयमभिज्ञानम् हनूमान् रत्नं यत्नाद्गृहीत्वा तदनुकपिभटश्चित्रकूटस्य संज्ञामूनत्वा पादारविंदद्वयमपि जन
कस्यात्मजाया हनूमान् पाणिभ्यामंघ्रियुग्मं पुनरुदधितटे मंत्रयित्वाभ्रगर्भेणोर्म्यामुत्पत्य मग्नं तदुरुभुजबला
डंबरेणाजगाम ३४ ततो मरुच्चुंबितचारुकेसरः प्रसन्नताराधिपमंडलाग्रणीः वियुक्तरामातुरदृष्टिवीक्षितः
समागतः श्रीहनुमान्वसंतवत् ३५ सीतापतिं ससंभ्रममालिंगितुमुद्यतं तं दृष्ट्वा देवपीतोनांबुनिधिर्नकोण
पूपुरीनिष्पिष्य चूर्णीकृतानानीतानि शिरांसि राक्षसपतेर्नानायि सीता मया आश्लेषार्पणपारितोषिकमर्हं ना
हमिवार्ताहरो जल्पन्नित्यनिलात्मजः स जयति व्रीडाजडो राघवे ३६ रामः सविकल्पं विधातारमुपालंभते क्रू
रकर्मा विधाता किं विधास्यतीति हनूमान्देव कुत्रायोध्याधिपो रामो दशरथवचनाद्दंडकारण्यमागात् क्वासौ मा
रीचनामा कनकमयमृगः कुत्र सीतापहारः क्व सुग्रीवेरामस्य मैत्री क्व जनकतनयान्वेषणे प्रेषितोहं योर्थो संभाव
नीयस्तमपि घटयति क्रूरकर्मा विधाता ३७

वश्चंद्रोपि वियुक्तो रामस्तस्यातुरदृष्ट्या वियुक्ता वियोगिन्यस्तासामप्यातुर
दृष्ट्येति योज्यम् ३५ आलिंगनार्पणमेव पारितोषकं प्रतिदानं तं प्रतिनार्हो भिन्न योग्योस्मीति कुत इत्यत आह यतो वार्ताहरः संदेशमात्र
हारक इति जल्पन् अनिलात्मजो विजयते ३६ स रामः सविकल्पमिति स्पष्टार्थं एतेनैवमुक्तं भवति अघटितघटनाचातुर्यशाली वि
धाता सीतामपि मेलयिष्यतीति भावः क्रूरोदयेविचित्रेचेति धरणिः विचित्रकर्मा ३७

जगतामानंदो यस्मात् किमियं विमनस्कते निपाठः ३८ सर्वस्कृगमम् ३९ हे राम यदि तस्याः कार्श्यं वर्ण्यते तर्हि हिमनिधेश्चंद्रस्य
प्रतिपत्कला स्थूला चेत्पांडिमा पांडुता अथ पांडिमा वर्ण्यते चेत् मृणालिका नीला एवं यदि घना निरंतरा बाष्पा वर्ण्यंते तर्हि वारिधिः

हेवीरविदीर्यमाणहृदयद्वारेणप्राणालोकांतरंगंतुमिच्छंतिकिमितितूर्णंचंद्रवदनांनावेदयासि हनूमानुस
त्वरम् हारामजगदानंदकिमिदंशिवमस्कृते नवप्राणगतिद्वारस्यार्गलेयंकरेमम ३८ इतिजानकीशिरोर-
त्नंरामायप्रयच्छति तथाच मनःशिलायास्तिलकंस्मरगंडस्थलेत्वया संमृष्टंजानकीवक्षःस्पर्शात्काणीकृतं
खगम् ३९ रामोअभिज्ञानत्रयमासाद्यसाधुमारुतेसाधु अयेप्रियायाःकुशलमस्ति आंजनेयःकार्श्यंचे
त्प्रतिपत्कलाहिमनिधेःस्थूलाथचेत्पांडिमानीलाएवमृणालिकायदिघनाबाष्पाःकियान्वारिधिः संतापोय
दिशीतलोहुतवहस्तस्याःकियद्वर्ण्यतेरामत्वत्स्मृतिमात्रमेवत्हृदयंलावण्यशेषंवपुः४०रामःमारुतेरक्षःसतेः का
कथा, हनूमान् भोप्रभो काश्रृंगारकथाकुतूहलकथागीता द्विविद्याकथामाद्यंत्कुंभिकथातुरंगमकथा
कोदंडदीक्षाकथाएकैवास्तिमिथःपलायनकथात्वद्वी तरक्षःपत्नेर्देवश्रीरघुनाथ तस्यनगरेस्वप्नेपिनान्याक
था ४१ रामःत्रिदशैरपिदुर्धर्षालंकानाममहापुरी कथंवीरत्वयादग्धाविद्यमानेदशानने ४२ हनूमान् -
निश्वासेनैवसीतायाराजन्कोपानलेनते दग्धपूर्वातुसालंकानिमित्तमभवत्कपिः ४३ ७

कियान् यद्वा बाष्पा वर्ण्यंते न दा घना वर्षंतो मेघाः तथा वारिधिरपि कियान् अन्यहृत्तं कियद्वर्ण्यते हृदयं त्वत्स्मृतिमात्रमेव वपुर्लावण्य
शेषमेव ४० मिथःश्रृंगारकथाका एवमुत्तरत्रापि ज्ञेयम् एवंविधे निकृष्टे पूर्वोत्तरपक्षस्थापनात्मकं वाक्यमुक्तम् ४१ ४२ पूर्वं दग्धाद्
ग्धपूर्वा कपिरहं निमित्तमेवाभवम् ४३

४४ अभ्रमरोभ्रमरोभवतिभ्रमरीभूतंकीटकंवीक्ष्य एवंतद्ध्यानात्तस्यरामस्यस्मरणात् मयिपुरुत्वमागतेसतितेनरामेणसार्द्धंरतिः कुतः पुंस्त्वमत्ररामत्वम् ४५ अत्ररतौ शेषंस्फुगमम् ४६ इतिश्रीमिश्रमोहनदासविरचितायांहनुमन्नाटकदीपिकायां हनू० षष्ठोऽकः ६ प्रेमभिन्नः अपूर्णकामाभिलाषः कपिनृपतिः सुग्रीवः प्रेयसींरुमामपास्यत्यक्त्वाइतिरघुजनवाक्यात्रामदूतवचनात् सैन्ययुक्तोभूत्वाआगतइत्यन्वयः इतिकिंनदेवाहहेपापजनकपुत्रीरामयोःकार्यमुच्चैर्महत्यत्नत्यक्त्वाइदंस्थैर्यादिकंकिमितिराज्यगर्वात्

अत्रांतरालेलंकायांसरमानामराक्षसींधर्मिणीजानकीवाचमूचे बिभेमिस्रखिसंवीक्ष्यभ्रमरीभूतकीटकम् तद्ध्यानादागतेपुंस्त्वेनेनसार्द्धंकुतोरतिः ४५ सरमा माकुरुधात्रसंदेहंरामेदशरथात्मजे तद्ध्यानादागतेस्त्रीत्वेविपरीतारतुनरतिः ४६ इतिश्रीहनुमन्महानाटकेहनूमद्विजयोनामषष्ठोऽकः ६ रामदूतेनोक्तःसुग्रीवः कपिनृपतिरपास्यप्रेयसींप्रेमभिन्नः किमितिजनकपुत्रीरामयोःकार्यमुच्चैः गतिरपिहरिसूनोर्विस्मृताराज्यगर्वादितिरघुजनवाक्यादागतःसैन्ययुक्तः १ अथविजयदशम्यामाश्विनेशुक्लपक्षेदशमुखनिधनायप्रस्थितोरामचंद्रः द्विरदविधुमहाब्जैर्यूथनाथैस्तथान्यैःकपिभिरपरिमाणैर्व्याप्तभूदिवरचक्रेः २ हरिसूनोर्वालिनोपिगतिर्मरणरूपाविस्मृतातवेतिशेषः यद्वावालिनः सकाशाद्यागतिस्ताराहरणंनिलीयस्थितिरितिरूपागतिः १ विजयमुहूर्तयुक्तायांदशम्यां द्विरदविधुमहाब्जेर्यूथनाथैःसह अंकानांवामतोगतिरितिन्यायात्द्विरदाः दिग्गजाः अष्टौविधुश्चंद्रःएकःएतत्संख्याकमहापद्मैःअष्टादशमहापद्मसंख्याकैर्यूथनाथैःतथाऽन्यैरपरिमितैःकपिभिःसह कीदृशैःव्याप्तंभुवः दिशामाकाशस्यमंडलंयैस्तैः द्विरदविधुमहऋक्षैरितिपाठेहस्तितुल्यैर्महऋक्षैर्जांबवत्प्रमुखैः २

६७ ६७ ६७ ६७

हेनृपतिमुकुटरत्नरामसर्पराजः शेषः त्वत्प्रयाणवर्णावलीं जरठकमठभर्तुः जरठोवृद्धः प्राचीनः सचासौकमठभर्नामिहाकूर्म
स्तस्यखर्परे पृष्ठकपाले दशनटंकैर्दशना एवटंकास्तैर्लिखति स्यात्खर्परः कपालोस्त्रीत्यमरः वानरबलेननिमज्जंतीभूस्तस्या
भारेणाक्रांतोभोगोयस्यसः कीदृशैर्दशनटंकैरुत्पतद्भिः उत्पतत्सुवानरेषुउत्पतद्भिः निपतत्सुवानरेषुखर्परेपतद्भिः ३ पुनरपिनि
श्वासोर्मीतिपद्येनवाहिनीभरमेवानुवर्णयति बहुत्वाद्याच्छिरसिद्यंभूरस्यर्थेराजतेसएवभुजंगाधिपः शिरोभिर्भुवंधत्ते कीदृशः
वानरवीराणांविक्रमेण कंदनादिविक्रमेणयोभरस्तेनासमंततोभुग्नःवक्रीभूतः पुनः किंभूतः कूनः मनः फणानांप्राग्भारस्यभंजि

हनूमान् रामंप्रति नृपतिमुकुटरत्नत्वत्प्रयाणप्रशास्तिं प्लवगबलनिमज्जद्भूभराक्रांतदेहः लिखतिदशनटंकैरु
त्पतद्भिः पतद्भि जरठकमठभर्तुः खर्परे सर्पराजः ३ श्वासोर्मिप्रतिसंधिरुंधितगलप्रच्छन्नहारावलीरत्नैरप्य
दयालुभिः कूनफणाप्राग्भारभंगाक्रमः श्रोत्राकाशनिरंतरालमिलितस्तब्धैः शिरोभिर्भुवं धत्तेवानरवीरविक्र
मभराभुग्नोभुजंगाधिपः ४ रामः अयेमरुत्तनय कूर्मंकुशायितुंदिशः स्थगयितुंभेत्तुंधरित्रीधरान् सिंधुंधूलि
भरेणकर्दमयितुंनैवराद्धुंनभः नासीरेषुपुरःपुरःस्खलद्बलालापस्यकोलाहलात्कर्तुंवीरवरूथिनीममपरंजे
तुंपुनस्त्वद्भुजः ५

कायाःभंगक्रमोयेन प्राग्भारोभंजिकामतेतिविश्वः कीदृशैः शिरोभिः श्वासानांयाऊर्मयस्ताभिः संधिःप्रति
श्वासनिर्गमनमार्गः संधिः मुखनासादिः तैरुंधितोयोगलः कंठस्तस्यवायुरोधनस्यसत्वात् प्रच्छिन्नानिप्रहितानि हारवल्याः रत्ना
नियेभ्यः स्तै अतएवादयालुभिः मिथः संधानपीडानभिज्ञैः पुनः श्रोत्राणामभावान्निरंतरालं अंतरालशून्यंयथास्यात्तथाअभितः
सर्वतः स्तब्धैः तत्रनैसर्गिकसौकुमार्यैः ४ तेनधूलीभरेणरोद्धुमाच्छादयितुंनासीरेषुअग्रयायिषुपुरः अग्रेचलं चलितंयद्बलं

सैन्यंतस्यालापस्य वागाडंबरस्यलड्डुजैरितिपूज्यताद्बहुवचनं लड्डुजेतिवापाठः ५ हेमानः अत्रकटकेकाचिन्नृपनिर
चनानास्तिइतिभिल्लीभिरभाणिउक्तंइतिकिंबतहास्यंहास्यहर्षविषादेषुबतहाकष्टकोपयोरितिधरणिः उक्षाणोवृषाःशेषंस्रगमं
६ हंतिहानिष्यंति वर्तमानसामीप्येवर्तमानवद्वा प्रतिबलंशत्रुसैन्यम् क्रियासिद्धिःकार्यसिद्धिः सत्वेधैर्ये उपकरणं रथच्छत्रादि
सामग्रीन स्रगमं अत्रान्यपद्यानियत्रसंतितत्र क्षेपकानीतिज्ञेयम् ७ मंत्रशालातुमंत्रणेतिशाश्वतः रामबाणाः तवशिरांसि८
ननुनराः वानराः किंकरिष्यंतितत्राह हेरावणमानुषीजातिंमानयबहुजानीहि केयंजातिरितितत्राह अभिमुखोरणाभिमुखोहे

भिल्लीभिःसहासं नोशस्त्रंनापिचास्त्रंनहिचरथकथानापिदंतीनवाजीनोक्षाणोनापिचोष्ट्रबतनचशिविरो
नापिराजाजटावान् नोवित्तंनापिवस्त्रंनचनृपरचनाकाचिदत्रास्तिमातः भ्रानर्दृष्टंस्थिताभिर्गिरिवरकुहरेभा
णिभिल्लीभिरेवम् ६ भिल्लाभ्रातरः विजेतव्यालंका चरणतरणीयोजलनिधिर्विपक्षःपौलस्त्योरणभुविस
हायाश्चकपयः तथाप्येकोरामःसकलमपिहंतिप्रतिबलंक्रियासिद्धिःसत्वेवसतिमहतांनोपकरणे ७ अत्रांतरे
तत्रलंकायांमंत्रणाया मुपविष्टःमंत्रिभिःप्रोत्साहितान्लंकाभटाननुलक्ष्यबभाषेबिभीषणःस्वर्णपुंखाः स्मराः
स्तीक्ष्णावज्रोपमावायुमनःप्रवेगाः यावन्नगृह्णंतिशिरांसिबाणाःप्रदीयतांदाशरथायमैथिली ८ ९

हयोर्जुनः तथैवदृष्टःज्ञातः तत्कारागृहनिवासित्वात्नेप्रसिद्धाःवानराः अवज्ञातुंतिरस्कर्तुंसांप्रतंयोग्यंनयोग्येसद्योपिसांप्रतंइति
विश्वः कुतःवालिभुजौस्मृत्वा भूक्रामणेकक्षांतरावस्थितत्वात् ततस्तस्मादतएववानराः महाग्निहोत्रिणंत्वांरामप्रतापाग्नौराक्ष
सकुलहविष्यहोतारंप्रार्थयेकिंप्रार्थयसीत्यत्राह सीतांमुंचकारागृहमेवकुटुंबंयेषांतानात्वत्कारागृहनिरुद्धान्मुंचसीतांस

मर्पयेति ९ १० अत्रेदंवृत्तं पुरारावणेनधर्मत्याजितैर्मुनिभिः रुषास्वस्वांगजनितघर्मजलंकुंभेप्रक्षिप्तंएतेननवनाशोभविष्य
तीत्युक्त्वाकुंभंभूमौनिधायगताः ततोजनकयज्ञार्थंहलाकर्षणकालेतद्भेदादाविर्भूतासीतासमुत्थितासाजनकजेत्युच्यते

बिभीषणोरावणंप्रत्याह ज्ञातिंमानयमानुषीमभिमुखोदृष्टस्त्वयाहैहयःस्मृत्वावालिभुजौच्चसांप्रत
मवज्ञातुंनतेवानराः तत्पौलस्त्यमहाग्निहोत्रिणमहंत्वामेवमभ्यर्थयेसीतामर्पयमुंचचक्रतुभुजः
काराकुट्टबीकृतान् ९ त्यजस्वकोपंकुलकीर्तिनाशनंभजस्वधर्मंकुलकीर्तिवर्द्धनं प्रसीदजीवेमसबां
धवावयंप्रदीयतांदाशरथायमैथिली १० रावणःसक्रोधं जानामिसीतांजनकप्रसूतांजानामिरामंम
धुसूदनंच वधंचजानामिनिजंदशास्यस्तथापिसीतांनसमर्पयामि ११ इतिवामचरणेनबिभीषणं
ताडयामास बिभीषणः ततश्चतुर्भिः सहमंत्रिपुत्रैरुत्सृज्यरक्षःकुलधूमकेतुः लंकामहातंकइवांब
रेणाबिभीषणोराघवमाजगाम १२

अतोजनकप्रसूतामित्युक्तम् वधंचजानामीत्यने
नममवधोवश्यंभावितेतिध्वनितं तांतुनसमर्पयामीत्युक्तंकुतोनसमर्पयसीत्यत्राह दशास्यइति दशास्योभूत्वाएकास्याय
कथंसमर्पयामीतिगूढोभिप्रायः अन्यत्स्पष्टम् ११ कइवबिभीषणःलंकायाःमहातंकःभयमिवपुनःरक्षःकुलायधूमकेतुरिवभ
यहेतुरित्यर्थःस्पष्टम् १२

अयंरघुपतिः अस्य बिभीषणस्याद्यैवलंकाधिपत्यश्रियंददातिदास्यतिकस्याः मूर्भाननेर्बिभीषणेनक्रियमाणायामूर्ध्नामस्तकेनानां दंडवत्प्रणिपातः सएवऋणंनदानृण्यायनमतः आनृण्यायेत्यर्थः अत्रविचिकित्समानान्कांश्चिदाहुः इहसंदेहेऽत्र स्यरामस्यैवभुजौ स्कग्रीवराज्यार्पणप्रतिभुवावुदारौ आर्द्रौवा शत्रुजारमहोदारजलेषुप्रतिभूस्त्रियामितिशाश्वतः अत्रस वैवयंसाक्षिणः कीदृशाः त्रैलोक्यप्रथिमापृथुत्वंसर्गसमयः ननः अनः अस्कसंनाशइति नश्वनिर्वृत्तिवाचकइत्यक्तत्वात्सर्गनाशयोर्मध्ये सत्यचरं पूर्वं स त्यंसत्यचरम् भूतपूर्वेचरट् विश्वादिमध्यावसानेचसत्यंराभंइताः शरणंमाप्ताः तदुक्ताइतिअन्योर्थः स्पष्टएवयथास्कग्रीवाग्रजह

आगतेबिभीषणेपरस्परं वानराः अद्यैवास्यबिभीषणस्यशरणापन्नस्यमूर्भानतेरानृण्यायददात्ययंरघु पतिर्लंकाधिपत्यश्रियं एतस्यैवभुजाविहप्रतिभुवौस्कग्रीवराज्यार्पणेत्रैलोक्यप्रथिमानसत्यचरिताःसर्वे- वयंसाक्षिणः १३ याविष्णुनिर्दशग्रीवेशिरश्छेदेपिशंकरात् दर्शनाद्रामदेवस्यसाविभूतिर्बिभीषणे १४ त तोरामेण अथदशरथपुत्रेतत्रसौमित्रीमित्रेषुदगुदधितटांतेगर्भदर्भावकीर्णे अहमिहहनिविष्टेनाग तोग्रेतिरोषाद्यदिजलधिरनेनाप्यात्तमाग्नेयमस्त्रम् १५ ७ ७ ७ ७ ७

त्वातस्मैराज्यंदत्तंतथास्याग्रजमपिहत्वा अस्मैराज्यंदास्यतीतिभावः १३ शिरसांकर्तनेकृतेसति एतेनसेव्यासेव्यत्वंसत्वत मःशरीरत्वंद्योतितं १४ ततः बिभीषणः रामपादौप्रणम्योपविशति दशरथपुत्रेउदकुउदधितटांतेउत्तरदिक्स्थसमुद्रतटे निविष्टेसति यदियदाजलनिधिः अग्रेरामपुरतः नागतः देवरूपेणनाविर्बभूवतदाअनेनरामेणापिआग्नेयंतज्जलशोष णहेतुंअस्त्रंबाणंआददेगृहीतं कीदृशेतटे गर्भेमध्यदेशेउपवेशनस्थानेदर्भैरवकीर्णेआस्तृतदर्भेइत्यर्थः मैनाकवात्सल्यादिनिभावः

७५

मृगंमारीचं वंचनहेतुत्वात् कपिंहनूमंतं सीतामार्गणहेतुत्वात् तपोधनंशापदातारं वैश्यंदशरथशापदातृत्वात् वनंसीताहर
णहेतुत्वात् राक्षसवधेमांसबाहुल्यादिभिरुपकारः कृतइतिभावः १६ ततअतिभयेनैवाशक्तवारिधिः स्वस्मिन्कृपासुत्पादयितुं
तत्पूर्वजकर्तृत्वमात्मनोद्योतयन्नवध्यत्वमाविष्करोति अस्मद्गोत्रेइति श्रीरामतवप्राग्भवः पूर्वजः सगरः अधिउच्चैः सविघंग
गामवाक् निर्ममेआनीतवानितियावत् यद्यपिभगीरथेनानीतागंगातथापिआश्वान्वेषणपुत्रदाहादिबीजत्वात्सगरएवआ
नीतवानितिध्वन्यर्थः उपर्यध्यधयः समाइतिशालतः गंगावांतिकगर्भोदविन्तेषुसविधोस्त्रियामितिधरणिः अत्रगर्भोदसवि

श्रीरामचंद्रेदशवक्त्रहानोक्तृतोद्यमेकव्यभुजः समस्ताः मित्राण्यमन्यंतमृगंकपिंचतपोधनंगादतरंवनंच १६
समुद्रोरामंप्रति अस्मद्गोत्रेभविष्यद्दशरथनृपतेरश्वमेधेषुसर्पिःसंपातोत्तापलोलज्वलदनलकलाव्याकुलंकू
र्मराजं ज्ञात्वारोदःपुटंवाननुतवसगरः प्राग्भवोभाविवेत्तानेतासधांबुधीनामपिसविधमवाग्वांतरश्मिः स्रवंतीम्
१७

धार्थैक्येनगंगागृह्यते भवागितिवचिनिर्माणेइतिअस्यधातोर्लिङिरूपंकविकामधेनौननुपुनरपिसधांबुधीनांवांताःअधोग
ताःयेरश्मयस्तरंगास्तेषांस्रवंतीं अष्टमंसमुद्रंमामंगीकृत्येत्यर्थः यद्वासधांबुधीनांमध्येष्टमंमामकृतेत्यर्थः विसर्गांतपाठेवांताः सर्वग
ताःरश्मयस्तेजांसिअस्य स्रवंतीअष्टमेपुमानितिधरणिःनद्यष्टमप्रधानेषुस्रवंतीस्यात्पुमान्हरेरितिचरकः अतःस्रवंतीं अष्टमंकिंकृत्वा
अस्मद्गोत्रेवंशेभावीयोदशरथाख्यनृपतिस्तस्याश्वमेधेषुयःसर्पिःसंपातः घृतादिहोमस्तेनोयउत्तापस्तद्युक्ताया:लोलाःसर्वतःप्रसरं
त्योज्वलदनलस्यकलाः ज्वालास्ताभिर्व्याकुलंअधःकूर्मराजंज्ञात्वाऊर्ध्वंचरोदःपुटं द्यावाभूमीचरोदसीत्यमरः द्यावाभूमीज्ञात्वा
नन्वेतत्पुरैवकथंज्ञातमितिचेत्तत्राह भाविवेत्ताएतद्भविनीतिज्ञानवान् यतस्त्वत्पूर्वजकर्तृकोहमतोभवदवध्योस्मीतिभावः विष
वृक्षोपिसंवर्ध्यस्वयंछेतुमसांप्रतम् १७

१८ अत्रेदं पूर्ववृत्तं मंदरपर्वतस्थो विश्वकर्मा नलपिता प्रसन्नः सन्नलमात्रे वरं ददौ तव पुत्रो नलो मत्तुल्यो भविता अन्यच्च शिल्पकर्मणि अनेन प्रक्षिप्तं शिलातृणकाष्ठादिकमपि जलेष्वुपर्येव स्थास्यते अतो नलेन सेतुर्बद्ध इति रामायणोक्तम् एते गुणाः प्रस्तरतरणरूपाः ग्रावाणः प्रस्तराः शिला इति शाश्वतः हे श्रीमद्दाशरथे यद्वा षष्ठ्यंतं श्रीमद्दाशरथेस्तव १९ एतन्पद्येन सैन्यबहुलं द्योतितम्

चापमानय सौमित्रे राघवे धिज्यधन्वनि समुद्रं शोषयिष्यामि पदा गच्छंतु वानराः १८ ततः प्रांजलिपुटोपस्थितस्य समुद्रस्याज्ञया नलेन निबध्यमाने सेतौ ततः प्रस्तरानलोक्याह हनूमान् ये मज्जंति निमज्जयंति च परांस्ते प्रस्तराः दुस्तरे वार्द्धौ वीर तरंति वानरभटान्संतारयंते ऽपि च नैते ग्राव्णां गुणा न वारिधिगुणा नो वानराणां गुणाः श्रीमद्दाशरथेः प्रतापमहिमारंभः समुज्जृंभते १९ कपिभिः सेनाप्लवगैः पुरोगैः पाथोमयं भूवलयं व्यलोकि तत्पृष्ठगैः पंकमयं तदान्यैरासीदिहांभोनिधिरित्यवादि २० इति श्रीहनुमन्नाटके सेतुबंधनं नाम सप्तमों ऽकः ७ ७ ७ ७ ७ रामः सुवेलाद्रितटावतीर्णः समुद्रमुल्लंघ्य विकीर्णसैन्यः कृपासुपेत्यारिकुलस्य दूतं सुरेंद्रनप्तारमथादिदेश १ ७ ७ ७ ७ ७

ननु वा स्तवं यद्वानराणां उन्मादो जातः स चातिहर्षात् ततोद्धतधूमस्तस्मादियमुक्तिः अन्यथा समुद्रे पंकादिदर्शनं पुनस्तदभावोपि वा स्तव श्चेत्ततः सेतुबंधनादिकमप्रयोजकं स्यात् उक्तं च रसो दर्थो प्रोदानंदापन्नो विरहाद्योल्बद्भ्रमः स उन्माद इति २० इति हनुमन्नाटके टीकायां सेतुबंधः सप्तमों ऽकः ७ विकीर्णं सर्वतो विक्षिप्तं सैन्यं यस्य सः सुवेलपर्वतावतारे १ ७

रभ सोगर्ववेगयो रितिचरकः नत्यजसि तर्हिलक्ष्मणेनमुक्ताः येमार्गणगणाबाणव्रातास्तैर्येच्छेदाः महाराः तेभ्यउच्छलंति
शोणितानितच्छत्रैः कंठैरातपत्रैर्वाच्छन्नमाच्छादितंवायथास्यात्तथायमपुरंयास्यसीति ग्रीवातपत्रयोश्छत्रमितिशा
श्वतः अत्रच्छत्रंग्रीवा २ चेद्यदिपितृवैरमनुस्मृत्यरामंहन्मितर्हिमहदकार्यंस्यात्चेत्पितुर्वालिनोहंतुर्घातकस्यरामस्य
हंतानोस्मिनस्यांतर्हिअपिशब्दात्पुनर्जनयितुर्वालिनश्चपरमंमहत् उत्पन्नमुपस्थितंसंपूर्णकार्यंस्यात् वेशब्दादत्रापि

रामः भोमहावीरांगद अज्ञानादथवाधिपत्यरभसादस्मत्परोक्षेलूतासीति यंपरिमुच्यतामि-
तिवचोमत्वादशास्यवद नोचेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणितच्छत्रच्छन्नदिगंतमं-
तकपुरंपुत्रैर्वृतोयास्यसि २ अंगदः यदाज्ञापयतिदेवः स्वगतम् हंतुर्हंतास्मिनोचेत्पितुरपिपरमो
त्पन्नसंपूर्णकार्यंस्याद्युद्धेवधिष्याम्यखिलकपिभटैरुत्कटोहंतमेकः ज्ञात्वासंत्यज्यवैरंगगनमिति
समुत्पत्यलंकोद्भटस्यप्रौढः पट्टाधिरूढः स्मरपतिसुतनजस्तन्महोत्पातकेतुः ३ ५ ५

पुनर्योजनं तथापिपितुर्हंतुः रामस्यापिकार्यंस्यात् वालिनोपिरावणः शल्यंरामस्यापि अतएवनह्ननेनेउभयोः कार्यं
स्यादितिभावः अनोखिलकपिभटैः सार्धमपितंराममेकोप्यहंवधिष्यामीतिज्ञात्वाविचार्यवैरमपिसंत्यज्यगगनंसमुत्प
त्यलंकाधिपस्यपट्टाधिरूढः बहिः सिंहासनस्थोभवदित्यर्थः तत्रापिप्रौढः सगर्वः स्मरपतिसुतोवालीनस्यतनयः तस्यरावणस्या
त्यनिष्टायमहोत्पातकेतुः धूमकेतुः ३

सीताकामुकोरामः अहेणकोपातिशयेन अरितवपुः शत्रुघातकशरीरः हेतिकष्टम् पक्षिकामुकयोर्विःस्यादित्येकाक्षरः अह रिति-
दिनकोपातिशययोरितिलिंगानुशासने अरितः शत्रुघातुक इतिसारस्वतः अयंभावार्थः ९ वन्यपतेर्वालिनः एकस्मिन्नह नियातः एका-
न्हिकः अत्रविषयेरावणः कोभूयात् कोपिभवतु अंगदः अनरण्याख्योरामपूर्वजः अपूर्वरणेरावणेनहतस्तद्वैरंस्मारयति अनरण्यकस्य
राज्ञः मरणातीतं मरणसमयादागतंयदुचिताम्बुत्वद्रुधिरतर्पणंतत्प्रदः यस्त्वद्रुधिरेणानरण्यंतर्पयिष्यतीतिभावः अत्रसर्वत्रैकांकेउक्ता

कस्त्वंवन्यपतेःस्फूतोवनपतिः कःसार्थिकस्त्वेकदाप्रातःसस समुद्रलंघन विधावेकाह्निकेवेद्मितम् अस्तित्व
त्तिसमान्वितोरघुवरेरुष्टे अत्र कःस्वस्तिमान् कोभूयादनरण्यकस्य मरणातीतोचितांबुप्रदः १० रामःकिंकुरुते
प्रतीपविजयं कोसौप्रतीपोजितो वालीसोपिचकोनवास्तिकिमुमुकोवेत्ति शारवामृगं आस्तेत्रापितवास्ति विस्मृ
तिरहोमोहोमहानीदृशः पर्यंके निजवालकेलिकृतयेबद्धोसियेनोपरि ११ अंगदः आदौवानरशावकःस
मतर दुर्लंघ्यमम्भोनिधिं दुर्भेद्यान्प्रविवेशदैत्यनिवहान्तत्पैष्यलंकापुरीम् क्षिप्त्वातद्वनरक्षिणोजनकजा
दृष्टातुफलावनंहत्वातांप्रदहन्पुरींचसगतोरामःकथंवर्ण्यते १२ र्थवादः कोधातिशयोक्तविस्मृतिवात् १० असौत्व
दुक्तरामइतियोज्यम् आस्तेकस्याःकोपपीडयोरित्यमरः येनवालिनामदीयक्रीडार्थउपरिपर्यंके ऊर्ध्वचरणोऽधःशिराःत्वंबद्धोऽसि
तत्रापितस्मिन्नपिवालिनिनिवाणेभवतोविस्मृतिः अहोमहदाश्चर्यंमोहोमूढतामहानस्तीति ११ रावणाविजयिवालिहननाद्रा-
मबलमुपदिश्यपुनःकैमुतिकन्यायेनराममनुवर्णयति दुर्भेद्यान् अजेयान् दैत्यनिवहान्समुद्रलंघनविघ्नकरान् दैत्यव्रजान्
त्संपाड्यहत्वालंकापुरींप्रविवेशेति योज्यम् क्षिप्त्वा निरस्कृत्यत्वांहत्वात्वयिविद्यमानेत्वत्कृतहननमेवलब्धुननम् पुरींलंकांप्रदहन्

सचवानरोपितूर्व्वीं गतः असदृक्षानकेशोरामः कथंवर्ण्यतइति १२ आःकोपे तेनरामेण किंनकिमपीत्यर्थः असौमद्भुणोराव
णः निजभुजान् आत्मभुजपराक्रमान् जानाति किंविशिष्टान् भुजान् साद्रिंरुद्रमुदस्यतः उत्क्षिप्तवतः कीदृशंरुद्रंशैलाश्चसाग-
राश्च धराचएतेषामाधारश्चासावुरगेंद्रश्चसएवांगदंबाहुभूषणंयस्यतम् पूर्वभागः प्रकरणेस्पष्टएववागर्थः प्रतिपाद्यते तेनरामे
णअजगवंभग्नं कीदृशं रामेतरैर्मनसाप्यधृष्यंकिमुभंक्तुं त्रुटिता धृष्ययोर्भग्नं भग्नोरुग्णौनाशखंडयोरितिशाश्वतः रामेणेतिसर्वत्र
वालीक्षतः घातितः कीदृशोवालीरूक्षतः शोभनाः विजयसूचकाः क्षताः प्रहारायस्य अनेकयुद्धविजयीत्यर्थः तालाःहताः हिंसिताः

रावणःसमाक्षिपति भग्नं भग्नसुमापतेरजगवंवालीक्षतःरूक्षतस्तालाःसमहताहताश्चजलधिर्बद्धश्च
बद्धश्चसः आः किंतेनसशैलसागरधराधारोरगेंद्रांगदं साद्रिंरुद्रमुदस्यतोनिजभुजान्जानात्य-
सौरावणः १३ ७ ७ ७ ७ ७ ७

किंभूतास्तालाः हताः परमारणोपायज्ञाः हनहिंसागत्योः गत्यर्थाज्ञानार्थाः जलधिर्बद्धः किंभूतोजलधिः बद्धः दुष्प्रेक्ष्यःकिमु-
बद्धइति बंधनेचदुरालोकेबद्धःसख्याजयोः पुमानितिधरणिः किंकृत्वा धनुर्भग्नंरुद्रंदंडमुदस्योद्धेराक्षिप्यति तालाःकिंकृ-
त्वाहताः सशैलसागरधराधारश्चासावुरगेंद्रःशेषः तस्यांगदंडदस्यलक्ष्मणपादांगुष्ठेनाक्षिप्यशिरोवानरभूषासूजनकेप्यंगदःपुमा-
निति धरणिःजलधिर्बद्धः किंकृत्वासाद्रिंवरुणं अर्कयुततस्यतद्रूहत्वात् साद्रिर्वरुणकंपयोरितिहेमः अद्रयोद्रुमशैलार्काइत्यमरःअ
सौरावणोनिजभुजाञ्जानातीतिकटाक्षः कीदृशोसौतः चौर्यकृत् तकारश्चौर्यगर्वयोरितिहेमः १३ ७ ७

रेइत्यनादरे रे राक्षसाः कथयत वदत रावणाख्यः रावणेति नामा राक्षसः कः कीदृशः रवींदुकुलयोः सोमसूर्यवंशयोः मध्ये र-
त्नंरूपगुणासाधारणीं सीतामपहृत्य नष्टः निलीयस्थितः त्रैलोक्यदीपनकरस्य रुद्रस्य त्रिशिखवत् त्रिशूलवत्कराले भयंकरे स-
गममन्यत् ४ अत्र उक्तिप्रत्युक्तौ घाटनम् एवार्थेऽपिशब्दः सोपित्वं त्वमेव अंगदः सोपित्वं कमिवावगच्छसि कमिवजाना-

ततः प्रतिशर्त्यंजलिबद्धः देवरामस्यदूतः शाखामृगो द्वारमध्यास्ते रावणः प्रवेशयततः प्रविशति प्रहस्ते
नसहांगदः आकाशेलक्ष्यंबध्वा अंगदः रे राक्षसाः कथयत कस रावणाख्यो रत्नरवींदुकुलयोरपहृत्य
नष्टः त्रैलोक्यदीपनकरत्रिशिखाकराले योरामनामदहने भविता पतंगः ४ रावणः साभ्यसूयम् सो
पित्वं कमिवावगच्छसि पुरायोदाहि लांगूलतो बद्धो मत्तनयेन हतस कथं मिथ्यावदन्नः पुरा किंलकापुरदी
पनं तवस कृतस्तेनाह तोक्षोयुधी त्युक्तः कोपभयत्रपा परवशास्तूष्णीमभूद्रावणः ५ रावणः कुतस्त्वंवानर
रामराजभवनेलेख्योऽथ सवाहको यातः कुत्रपुरागतः सहनुमान्निर्दग्धलंकापुरः अंगदः साधिक्षेपम् बद्धो
राक्षससूनुनेति कपिभिः संताडितस्तर्जितः सव्रीडार्तिपराभवोवनमृगः कुत्रेति नज्ञायते ६

सियः पुरालांगूलतः अदाहिमत्तनयेनेंद्रजिता बद्धश्चवहं हे तिवितर्के सहनुमान्नः अस्माकं पुरोग्रे कथं मिथ्यावदत् किंमिथ्यो-
क्तं अंगदः लंकापुरीदहनं मयाकृतमित्युक्तं तव स कृतोऽक्षनामानि हतइत्युक्तं तेनांगदेनोक्तो रावणस्तूष्णीमभूत् कीदृशः को
परस्त्वंगद भयं हनूमतः त्रपाश्रोतृभ्यः एतदधीनः रावणः ५ अत्रापि उभयवादः योहनुमान्पुरा आगतः सेकुत्रयातः व्रीडैवार्तिस्ति
नःपराभवोयस्य ६

संभाव्यते संभावितः क्रियते अदीदलत् उन्मूलयामास स्रुगमं ७ अत्रानेकानिपद्यानि क्षेपकानि तेषु कानिचित्लिख्यंते
योजनकजां प्रति कौशल्यं रामकुशलत्वमवीवदत् आराममभूमुटत् भंगीचकार सुटत्च संभ्रमे सहनूमान्प्रवीरोद्यमे प्रकृष्टानां
वीराणां संमर्दे सति योद्धुं नादिश्यते परंतु दूरोल्लंघने दौत्येचादिश्यते इति यत्तदनादृगवमानं कृतवान्सोऽस्माकं न कियानिति भावः
८ रे अंगद स एक एव कपिर्वध्योस्ति ननु बहुषु वीरेषु सत्सु कथमेक एव वध्य इत्यपेक्षायामाह रामः स्त्रीविरहेणहारितं वपुर्यं

अंगदः योयुष्माकमदीदहत्पुरमिदं योदीदलत्काननं योक्षं वीरममीमरद्गिरिदरीं योरबीभरद्राक्षसैः सोस्माकं
कटकेकदाचिदपि नो वीरेषु संभाव्यते दूतत्वेन इतस्ततः प्रतिदिनं संप्रेष्यते सांप्रतम् ७ अपिच योलंकां समदी
दहन्नवसूतं रक्षांसि चापीपिषद्यः कौशल्यमवीवदज्जनकजामब्धिं तथातीतरत् यश्चारामम भूमुटत्स हनु-
मानस्मत्प्रवीरोद्यमे दूराक्रामणदौत्य एव न पुनर्योद्धुं समादिश्यते ८ रावणः सावज्ञम् रामस्त्रीविरहे
णहारितवपुस्तच्चिंतया लक्ष्मणः सुग्रीवोंगदशल्यभेदकतया निर्मूलकूलद्रुमः गण्यः कस्य बिभीष-
णः स चरिपोः कारुण्यदैन्यातिथिर्लंकातंकविटंकपावकपटुर्वध्यो ममैकः कपिः ९ नसः तच्चिंतया रामस्य

चिंतया लक्ष्मणोपि हारितवपुः सुग्रीवः निर्मूलकूलद्रुमः निर्मूलितनदीतटवृक्षवत्पातुकः अनिवृद्धत्वात् अंगदशल्यभेदक
तया वालीतु तेन घातितः तत्सुतोंगदोस्य भेदकतया स शल्यो निरुत्साहः सन्मृतवत् बिभीषणः कस्येति केन गण्यः स च बिभीषणः रि
पोः रामस्य कारुण्यस्य दैन्येन मनोबलाभावेन अतिथिर्जातः कारुण्यं करुणा घृणेत्यमरः कीदृशः कपिः लंकायास्तद्वासिजनानां आ
तंकविटंकः भयनिर्मितायः पावकः तद्दाने पटुः मध्यमपदलोपी समासः यद्वा स्त्रीविः अहेण हा आरितवपुः इति पदच्छेदः स्त्रीविः

ध्यानपूर्वकंसंध्यार्च्चनंचतेनचरितंकृतंएवंभूतोपिवालीयेनरामेण एकेनैवबाणेनहतः कोपेनहतःसोपिवालीप्रगर्वत्यक्त्वाद्यु
मणिसुतोयम स्तस्युरंपतितःप्राप्तः तस्माद्धोलंकेशगर्वंमुंचकथयैवधानरव्रीडयैव वानराणांलज्जयैवयमपुरंगतइति त्वद्विजयीवा
ल्येवाहतःभवतःकाकथेतिभावः १४ निजालयमिवन्निजगृहमिवसीताअदर्शिच समभ्यभाषिच यस्यसंदेशाहरेणैतत्कृतंस-
रामःकथंकथ्यतइति ध्वनिः १५अरण्येतृणचरंतत्रापिकनकमृगमात्रंनतुसिंहादिहतवानितिशेषः हंताघातुकः कुतोयातः

अंगदःसाटोपंस्वाभिभक्तिमभिनीय कृत्वाकक्षागतंत्वांकपिकुलतिलकोवालिनामाबलीयान्भ्रांतःसप्ता
ब्धितीरेक्षणाभवचरितंध्यानसंध्यार्च्चनंच बाणेनैकेनयेनाहतइतिपतितोवानरव्रीडयेवत्यक्त्वासोपिप्रग
र्वंद्युमणिसुतपुरंभंचलंकेशगर्वम् १४ यत्संदेशाहरेणामारुतसुतेनातारिवाराम्निधिःक्षिप्रंगोष्पदव
न्निजालयमिवप्राविशिलंकापुरी सीतादर्शिसमभ्यभाषिचवनंचाभंजिरक्षःपतेः सैन्यंभूयबाधिव्यदा-
हिचपुरीरामःकथंवक्ष्यते १५ रावणःसक्रोधंकुतोहंतारण्येकनकमृगमात्रंतृणचरंकुतोवृक्षाद्वृक्षप्लुवन
निपुणोवालिनिहतःकुतोवन्हिज्वालाजटिलशरसंधानसुदृढस्त्वहंयुद्धोद्योगीगगनमधितिष्ठेंद्रवि-
जयी १६ गगनमधितिष्ठेअधिश्रिये गगनलोकानपिजितवानितिभावः कीदृशोहंइंद्रविजयीअत्रैकारादिकारलोपः न-
दुक्तंशब्दभास्करे क्वचिदेङः अकाराकारेकाराणांक्वचिल्लोपःस्यान्नशश्वत् सुगमंअथवागर्थः तृणांपिशितशाष्ययोरितिहेमी
तृणचरमांसाशिनं रक्षोरूपंरक्षोनाद्वीपश्चारिवनोरितिधनंजयः द्वीपादपिद्वीप्लवनेद्वीपोल्लंघनोविदग्धःकुतोरामएवतद्धंता वन्हिज्वा
लेत्यादिरामविशेषणंपुनःकीदृशोरामः इंद्रस्यविजयः इंद्रविजयोस्यास्तीति इंद्रविजयी इंद्रजयकारकइति कुतोहंरावणःउद्गतोयोगःउ-
द्योगःयुद्धउद्योगीरणसंभ्रयःसन्अधितिष्ठे गगनंलाघवं १६

संधौअक्षतः विग्रहेक्षतःदशाननीतिपाठेसमाहारेङीप् दशानामाननानांसमाहारस्त्वमिति १७ खरदूषणेत्युपलक्षणं ख
रदूषणत्रिशिरसएवएणाः मृगाःएणानांमांसेऐणं अन्यत्सुगमम् १८ एतन्ममैश्वर्येसतिनिर्लज्जौतापसौइहमद्ग्रेवानरान्मे
लयित्वातांसीतांकथंभवतःप्राप्नुतः भूप्रासाबात्मनेपदीवा अथवागर्थः निर्गताब्रह्मांडेलज्जायाभ्यां यौवीक्ष्यान्येसलज्जा
भवंतीति तापसौतपोन्हृदयौ तपोमेन्हृदयंसाक्षादित्युक्तत्वात् कथंशिरश्चालने कथंभवतः अपितुनभवतएव १९ राम–

अंगदः समदं संधौवाविग्रहेवापिमयिदूतेदशाननअक्षतोवाक्षतोवापिक्षितिपीठेलुठिष्यसि १७ अवेहिमांरा
वणरामदूतंबाणायदीयाःखरदूषणौपं भुक्त्वातृषार्ताइवशोणितांभः पास्यंतितेकंठघटैःसरंध्रैः १८ रावणःरेरेवान
राधूमकुट्मलापिन्पश्य मृत्युःपादांतभृत्यस्तपतिदिनकरोमंदमंदंमसाग्रेप्यष्टौतेलोकपालाममभयचकिताः
पादरेणुर्ववंदुः दृष्ट्वातंचद्रुहासंस्त्रवतिसुखधूपन्नगीनांचगर्भानिर्लज्जौतापसौतौकथमिहभवतोवानरा
न्मेलयित्वा १९ अंगदस्तत्क्षणाविःकृतक्रोधःकंपमानःपाणितलेनभूतलंताडयित्वादोःस्तंभास्फालके
लिंनादयति रेरेराक्षसवंशघातसमरेनाराचचक्राहतंरामोत्तुंगपतंगचापयुगलेतेजोभिराडंबरे म
न्येशीर्षभिदंत्वदीयमखिलभूमंडलेपातितंगृध्रैरालुठितंशिवाकवलितंकाकैःक्षतंयास्यति २० स्योत्तुं
गौसर्वोत्तमौयौपतंगचापौबाणधनुषीतयोर्युगुलेतेजोभिः क्षात्रमतापैःकृत्वाआडंबरेसमारब्धेसतिपतंगोरविमार्गणा
वितिविश्वः आडंबरःसमारंभेगजगर्जितसूर्ययोरितिविश्वः यद्वाकीदृशेसमरे रामस्योत्तुंगपतंगचापयुक्ताः अत्वाद्
शोयत्रसर्वदिक्षुरामबाणचापावेवदृश्येतेयत्रनान्यत् अत्वोरुश्रीदिक्प्रदानयोरितिचरकःपुनःकीदृशेसमरेतेजोभिराडंबरेआडं
बरःप्रगल्भ्यंयत्रअखिलंशीर्षदशकंतस्यसमूहःअनेनशीर्षाणांसमूहःशैर्षं २०

क्रूरेति कटुप्रलापी तदीयकोपेतस्मिन् दूत एव यः कोपस्तेन क्वचित्कस्मिंश्चिदंगे वैरूप्यं विरूपत्वं कर्णनासाद्यभावम् २१ २२
इदं व्यंजकमेतेन धर्मशीलत्वमुक्तम बलत्वंच प्रकरणार्थस्तु स्पष्ट एव अथवाग्रार्थः प्रतीयते वाणी कथयति हे रावण स्व
कीये गृहे किं वस्तु स्तोषितवत्तु किमपि नास्तीति भावः मत् मत्तः वाण्याः सकाशात् वर्णनद्वारेण तं राघवं न ईक्ष्यसे न विचारयसि तं
कं यस्येंद्रमाल्यकरमित्यादियोज्यम् यत्तदोर्नित्ययोगात् कीदृशं राघवं रक्षांसि भक्ष्याणि वध्यानि यस्य एवंभूतं मनुष्य-

रावणः सप्रपंचं रेरे शाखामृगत्वामहं धर्मशीलतया कटुप्रलापिनमपि न हन्मि उक्तंच यथोक्तवादी दूतः स्या
न्न स वध्यो महीभुजा क्रूरस्तदीयकोपेन क्वचिद्वैरूप्यमर्हति २१ अंगदः सर्वे दग्ध्यं परदारापहरणेन श्रुता पाद
शानन् दृष्टा दूतपरित्राणे साधो स्ते धर्मशीलता २२ रावणः सगर्वं इंद्रं माल्यकरं सहस्रकिरणं द्वारि प्रतीहा
रकं चंद्रं छत्रधरं समीर वरुणौ संमार्जयंतौ गृहान् पाचक्ये परिनिष्ठितं हुतवहं किं मद्गृहे नेक्ष्यसे रक्षोभक्ष्यम
नुष्यमात्रवपुषं तं राघवं स्तोषि किम् २३ अंगदो विहस्य रेरे रावण हीन दीन कुमते रामोपि किं मानुषः किं
गंगापि नदी गजः सुरगजोप्युच्चैः श्रवाः किं हयः किं रंभाप्यबला कृतं किमु युगं कामोपि धन्वी न किं त्रै-
लोक्यप्रकटप्रतापविभवः किं रे हनूमान् कपिः २४

मात्रं मनुष्या मात्रा अंशा यस्य एवंभूतं वपुर्यस्य २३
हीना अल्पा तत्रापि दीना अनुकंप्या विमतिर्विपरीता मतिर्यस्य तत्संबुद्धिः उक्तं रसोदधौ शास्त्रविचारसमुत्थां निर्धारण
मर्थतो मतं विबुधैरिति अत एवाशास्त्रीयमतेति त्रिपदं वा संबोधनम् त्रैलोक्ये प्रकटः प्रसिद्धः प्रतापस्य विभवो विभवं यस्य
स इति राम गंगा गजोच्चैःश्रवः काम हनुमतां प्रत्येकं प्रथमैकवचनं विशेषणं यद्वा बहुवचनं किंविशिष्टाः सर्वे त्रैलोक्य प्रक-

टः प्रसिद्धः यः प्रतापस्तेनाविभवः ईश्वराः एतेनैतेषामैश्वर्यं भीषणत्वं द्योतितं उक्तंच रसोदधौ ऐश्वर्यैराकृतिभिः प्रकृतिभिरपि भीषणस्त्रिधा गदित इति २४ इहलंकायां पूर्वंगतः हनूमान् क्व अधुना कुत्रास्ते विष्टपानां स्वर्गनिवासिनां देवानामपि विजयिनं मां तृणाय मन्यसे तृणप्रायं अंगदः हंहो आश्चर्यं हे पौलस्त्य तव बलमथनस्य वालिनः पुत्रो हं २५

रावणः सरोषं कस्त्वं कस्यासि पुत्रः क्व पुनरिहागतः किन्नु कृत्यं च कस्माद्धृस्पष्टुं विष्टपानां विजयिनमपि मां मन्यसे त्वं तृणाय हंहो पौलस्त्य पुत्रस्तव बलमथनश्चांगदोहं क्षवेलात्समागतो रामदूतो विसृज जडमते जानकीं वा शिरो वा २५ रावणः धिग्धिगंगद मानेन येन तेनिहतः पिता निर्मानानां रिवृत्तिस्तेतस्य दूतत्व मागतः २६ अंगदः युक्तं कृतं तु रामेण येन मे निहतः पिता त्रैलोक्यं शास्ति कृत्याय वर्तते सद्दूरात्मनाम् २७ रावणः किं कार्यं वद राघवस्य न च किं बद्धः किमंभोनिधिः क्रीडार्थं कपिपोतकैरतरलं ज्ञानास्यसौ मानाहि लंकानाकानिकायवीरवसतिं किं वेत्ति वृत्यन्वहं कोलंकाधिपतिर्विभीषण इति प्रख्यातकीर्तिर्भुवि २८ रावणः बद्धः सेतुर्यदि जलनिधौ वानरैस्तावता किं नो वल्मीकाः क्षितिधर निभाः किं क्रियंते पिपीलैः दग्धा लंका यदपि कपिना सस्वभावः किलाग्नेः शौर्यं चाश्चर्यं निजभुजजयैः किं कृतं रामनाम्ना २९

दूतत्वं दूतभावं २६ शास्तिर्निग्रहः स एव कृत्यं यस्मै परदारापहारिणो हननं युक्तमिति भावः २७ अतरलं संग्रामे चपलयितं नाकनिकाया देवास्तदरेर्मम वसतिं स्थानं च हुमिति क्रोधे अंगदः आह लंकाधिपतिः कः भुवि विभीषणो लंकेश इति प्रसिद्धकीर्तिः सुगममन्यत् २८ निजभुजजयनिमित्तं पिपीलिकैः कीटैः प्रकरणार्थोत्रस्पष्ट एव वागर्थः प्रतिपाद्यते किमित्यपूर्तौ रामनाम्ना निजभुजजयैः किमपि शौर्यं चाश्चर्यं न कृतं परं तु तद्‌गैरेव तत्कृतं स तु जगदुद्धरणशक्त इति भावः २९

नामेतिप्रसिद्धंसएवयेनतेभगिनीशूर्पनखातस्याःनासावसया पंकिलः लग्नकर्दमः खरदूषणात्रिशिरसांत्वन्भ्रा
तृणांशिरः कृत्तनोत्थशोणितेर्धौतः क्रोधातिशयासुनः मर्मस्पृशातियेनरामेणसंमूर्च्छितस्यपर्यस्तलोचनस्यतवदर्पमि
वस्वस्कः त्वद्भगिन्याःघ्राणंविलुठितंछित्वाभूमौपातितक्ष्मसंसरामःकथंविस्मृतइतिकीदृश्यपात्वस्कः तद्वालांतिनितांतबद्धव
पुषः तद्वालांतिसीतासमीपेनितांतंबद्धंस्थिरीकृतंवपुःययासातस्याःसीतावदहमप्यत्रोप विश्रामीतिभावः ३० एतच्छ्रवणापत्रपो रावण
स्तदुक्तविस्मरणायान्यदवाहअकलितःअप्रतर्क्यःमहिमायेषांतेमासद्वाविंशत्याद्याःसंदेकलेत्सभरःसर्वस्तगमम् ३१ भुजगर्वमपाक

अंगदःरामोनामसएवयेनभगिनीनासावसापंकिलःखड्गस्तेखरदूषणात्रिशिरसांधौतःशिरःशोणितैःतद्वालांति
नितांतबद्धवपुषःसंमूर्च्छितस्यकवमघ्राणंदर्पमिवस्वस्कःविलुठितंरामःकथंविस्मृतः ३० रावणःपरिमितमहिमा
नंक्षुद्रमेनंसमुद्रांक्षितिधरघटनाभिःकोयमुत्तीर्यगर्वःअकलितमहिमानःसंतिदुष्प्रापपारादशवदनभुजास्तेविं-
शतिःसिंधुनाथाः ३१ अंगदः रेरेरावणरावणाः कतिबहूनेतान्वयंश्रुत्स्मः प्रागेकंकिलकार्तवीर्यनृपतेर्दोर्दंड
पिंडीकृतम् एकंनर्तनदापितान्नकवलंदैत्येंद्रदासीगणैरन्यंवक्तुमपित्रपामहइतित्वंतेषुकोन्योथवा ३२

रिष्यन्नंगदोनुवदति रेरेरावणरावणाःकतिकियंतःसंतिवयंतुएतान्वक्ष्यमाणलक्षणान् अन्यापराधधूरान् आहतशिलाक्रांतकरा
दीनपिश्रुत्स्मःतानेवाहप्राक्पूर्वंकार्तवीर्यस्यनृपतेर्दोर्दंडैःपिंडीकृतंबद्धंअन्यंचदैत्येंद्रदासीजनैर्दैत्येंद्रस्यप्रल्हादस्यबलेर्वादा-
सीजनैःतिरस्कृतमितिशेषःबलिनाद्वारिनिर्जित्यबद्धःतदाक्षरक्षामोजातः तदावरोधागतैर्दासीजनैर्नर्तनेनदापितमन्नकवलंय
स्मैतमेकअन्यंवालिकक्षांतर्लीनंपुनर्मत्सर्यकोपरिबद्धंएकंवक्तुंत्रपामहेस्वपितृवर्णनेनलज्जामहेतेषुरावणेषुत्वंकःअथवाएतेभ्योन्यएववा

तेनएवमुक्तोरावणः सापत्रपोभूत्वात्मानंलक्षयति ३३ एवंबलमात्मानंउपदिश्यपूर्वपराजयमा च्छादयतिस्यातांनामेतिना
मेतिप्रसिद्धौकपींद्रहैहयपतीवाल्यर्जुनौस्यातां संभावनाकीदृशौअवगाढःसर्वातिरेकः अंतरेमध्येस्थेमाबलंययोस्तौसर्वा
तिबलावितिस्थेमातिबलधैर्ययोरितिहैमी परंतुतस्यदशकंधरस्यस्कंधप्रतिष्ठापुनः अधुनामहतीजाताकस्यधुर्जटेःशंभुः
यदंसस्थलीयस्यस्कंधप्रदेशंस्वेनात्मनैवइभाजिनंगजचर्मतस्यपल्लवस्थानीयानिकरचरणादिचर्माणितेनझटितिशीघ्र

रावणः भ्रातामेकुंभकर्णःसकलरिपुकुलव्रातसंहारमूर्तिः पुत्रोमेमेघनादःप्रहसितवदनोयेनबद्धःसुरेंद्रः रव
ड्गोमेचंद्रहासोरणमुखचपलोराक्षसामेसहायाः सोहंवैदेवशत्रुस्त्रिभुवनविजयीरावणोनामराजा ३३
स्यातांनामकपींद्रहैहयपतीतत्रावगाढांतरस्थेमानौदशकंधरस्यमहतीस्कंधप्रतिष्ठापुनः सद्यःपाटित
कंठकीकसकणाकीर्णायदंसस्थलीस्वेनेभाजिनपल्लवेनझटितिप्रास्फोटयद्धूर्जटिः ३४ रावणः सर्वैर्यस्य
समंसमेत्यकठिनांवक्षस्थलींसंयुगेनिर्भग्नंमुखमेवदंतमुसलैरैरावतस्योन्नतैः हेलोत्क्षिप्तमहीध्रकं
पजनितत्रासांगनालिंगनप्राप्तानंदहरप्रसादमु दितश्चिंत्यः समेऽन्योरिपुः ३५ मेवास्फोटयत्कीदृशीमंस
स्थलींसद्यःतत्क्षणात्पाटितारुद्रार्थंकृत्तायेकंठास्तेषांकीकसस्यये कणाअस्थिकणास्तैराकीर्णांकीकसंकुल्यमस्थिचेत्यमरः वाल्य
र्जुनसमयादध्यारूढबलोस्मीत्याशयः ३४ संयुगेऐरावतस्येंद्रगजस्यसर्वैर्दंताएवमुशलास्तैः सममेकदैवकठिनांमदीयवक्षस्थलींसमेत्य
प्राप्यमुखंस्वांगभागमेवनिर्भग्नंखंडितंनतुवक्षस्थलीति एवंभूतोहमिति कर्मांतरमाह सोहंहेलयामयैवक्षिप्तःयोमहीध्रःकैलासस्त-
स्मादधःकंपस्तेनजनितस्त्रासोयस्याः एवंभूतायाअंगनायाःपार्वत्याःआलिंगनेनप्राप्तानंदोयोहरस्तस्यप्रसादेनमुदितस्तस्यमेममअन्योरा
मादन्यतरोरिपुश्चिंत्यः नतुवर्तमानोस्तीतिभावः ३५

अखिलंपूर्णं बलेनेति लक्ष्मणेन धनुषा कृता या रेखा सापि त्वया न लंघिता तच्चारेण राम दूतेन हनूमता ३६ हे अंगद यस्त्वं मां प्रचूर्णित-
बलं रामादीषन्न्यूनबलं वदसि त्तत्पूर्यतां रामादधिकबलोस्मीति भाव: काकाक्षिन्यायेनालमोयोजनं सर्वत्र सदैव हे माक्षौ हिर
ण्याक्ष: तदादीन्दैत्येश्वरान् मतियाबले कथासाम ब्राहुसारादलं पर्यतां मद्बाहुबललेशस्तेष्वस्तीति भाव: अथानंतरं शेषस्य
सर्पराजस्य हिरण्यकशिपो: भस्मांगदनाम्नो दैत्यस्य अन्येषाममरद्विषां च बलकथा मद्बाहुसारादलं पूर्यतां स्वर्णांगद

अंगद: रेरेरावणशंभुशैलमथनप्रख्यातवीर्य: कथं रामं योद्धुमिहेच्छसि दमखिलं चेत्तन्नयुक्तं तथा रामस्ति
ष्ठतु लक्ष्मणेन धनुषा रेखा कृता लंघिता तच्चारेण लंघितो जलनिधिर्दग्धा हताक्ष: पुरी ३६ रावण: यन्मां
त्वं वदसि प्रचूर्णितबलं हे माक्ष दैत्येश्वरं श्छेषस्याप्यथवा हिरण्यकशिपोर्भस्मांगदस्यांगद अन्येषाममर
द्विषां बलकथा मद्बाहुसारादलं रामश्चेद्रिपुहा प्रियापहरणे संधिं विधत्ते कथम् ३७ अंगद: शिरोभिर्मा देवी:
शिव इव नते दास्यति पुन: प्रबंधं पश्याब्धे: सरस इव कैलासस्फ भट हितं तु ब्रूमस्त्वां मम जनकदोर्दंडविज
यस्फुरत्कीर्तिस्तंभस्त्यज कमलबंधो: कुलवधूम् ३८ रावण: कस्त्वं वालितनूद्भवो रघुपतेर्दूत: स वाली तिक:
को वा वानरराघव: समुचितातेवालिनो विस्मृति: त्वां बध्वा चतुरंबुराशिषु परिभ्राम्यन्मुहूर्तेन य: संध्यामर्चयति
स्म निरूपक कथं तातस्त्वया विस्मृत: ३९ स्येतिपाठे स्वर्णस्य वर्णस्तस्यांगदे बाहुभूषणे यस्य हिरण्यकशिपोरिति हिरण्या
क्षादिभ्योप्यहमेव बलीत्यभिप्राय: अन्यत्सुगमम् ३७ हे कैलासस्फ भट एतद्दुस्तरपाषौरुषंवयंतुअतस्त्वां प्रतिहितं ब्रूम: शिरोभिर्म-
स्तकै: मा देवी: मात्र्क्रीड शिव इव पुन: रामस्ते शिरांसि न दास्यति यथा शिवार्थे भवते वकृत्तानि शिरांसि शिव: पुनरुक्तम्यमदान्न

तथारामइति अब्धेःप्रबंधंप्रकृष्टंबंधनंयस्यकस्यैवसरसइव कुतोहितंब्रूमः यतस्त्वंमदीयापितृभुजदंडस्यजंगमः कीर्तिस्तंभः
यत्रयन्नत्वंमयासितत्वततत्रवालिनाबद्धोयमिति कीर्तिस्तंभः ननु किंहितंवदसितदाह कमलबंधोः सूर्यस्यकुलवधूंसीतांत्यजेति
३८ ३९ रेवानराधमअति कटुप्रलापीत्वंकइत्यपेक्षायामाह तत्रस्वामिपित्रोरात्मैश्वर्यंदर्शयतिरेरक्षः अहंराघवस्यदूतोस्मिकिं-
भूतस्यत्वद्दोर्दंडानांप्रचंडंयत्प्रतिहननंबलहारित्वंतस्यविधोविधानेमोहंसगर्वयत्बाव्होः सहस्रंतस्यच्छेदएवक्रीडातस्यां

अंगदः त्वद्दोर्दंडप्रचंडप्रतिहननविधिप्रौढबाव्होः सहस्रच्छेदक्रीडाप्रवीणास्थिरपरशुमहागर्वनिर्वाप
कस्य दूतोहंराघवस्यत्वदपघनघृणावासवालाग्रलोम्नः पुत्रःसूत्रामसूनोः प्लवगबलपतेर्नामतश्चां
गदोहं ४० रावणः यद्भग्नाःकिलबालतालतरवोरामेणसार्द्धंत्वचःछिंन्नंयत्त्रिपुरातनंशिवधनुस्त
द्दीयसुहृद्दिश्यतेनासीदेतदनागतंस्मृतिपथंस्वर्लोकधूमध्वजः पौलस्त्यःकरकंदुकीकृतहरक्रीडाच
लोरावणः ४१

प्रवीणःस्थिरःअतिधीरोयः परशुर्जामदग्न्यस्तस्ययोमहान्गर्वस्तस्यनिर्वापकस्यशामक-
स्य त्वद्भुजजयिहैहयभुजसहस्रच्छेतृपरशुरामजयिनइतिध्वनिःपुनःसुत्रामसूनोरिंद्रात्मजस्यवालिनः पुत्रोस्मिकिंभूत-
स्यवालिनः त्वदपघनंत्वच्छरीरंतत्रयाघृणाकरुणातयात्वदावासायकृतानिपुच्छवालाग्रलोमानियेनतस्य त्वांकक्षागतं
कृत्वाभुवंभ्रांत्वायदागतस्तदागतसज्ञंत्वांदृष्ट्वावालाग्रलोमस्कंविश्रमितवान्तस्यपुत्रोहमिति ४० ४१ नोस्माकंश्रोत्रप
थेषुकर्णमार्गेषुकतिकियंतःशूराःपदंस्थानंचक्रिरेस्मुताइति नोइतिपाठेकियंतःकियंतोवीराःपदंनोचक्रिरेअपितुसर्वएवत्व

क्रिरे इति तेषामपि समत्वं मार्गं किंविशिष्टाः शूराः प्राञ्चः शौर्यपूज्याः कोलंकाभट इत्यपेक्षायामाह यद्दोर्मंडलेति शंकरगि
रेः कैलासस्य धातवो गैरिकादयस्तद्रुवा अवयवाः अद्यापि यस्य दोर्मंडलेन गाढाक्रमणवशान्निःस्यंदनिःसृतं यद्रक्तं तस्य
याश्छटाः प्रवाहास्तेषां माशंकामंकुरयंति जनयंति ४२ तस्मै रावणायकः पुमान्वैरायते न कोपीति यः अस्खलितेनाव्य
ग्रेण चित्तेन तदधिकं पूर्वतोप्यधिकं यथा स्यात्तथा ब्रह्माणं प्रजापतिं रुद्रं वा प्रीणयत् उभयोः सृष्टिकारित्वात् ब्रह्मत्वं किंकृत्वा स्वे

रावणः शूराः श्रोत्रपथेषु नः कतिकति प्राञ्चः पदं चक्रिरे तेषामेवाविलंघ्यसाम्यसरणीं जागर्ति लंकाभटः य
द्दोर्मंडलगाढपीडनवशान्निष्यंदरक्तच्छटाः शंकामंकुरयति शंकरगिरेरद्यापि धातुद्रवाः ४२ स्वे षूत्कृत्य हुते
षु मूर्द्धसु जवाद्ग्नेः स्फुरित्वा बहिर्व्याकीर्णेष्वलिकेषु देवलिखितं दृष्ट्वापि रामार्पणम् चित्तेनास्खलिते
न यस्तदधिकं ब्रह्माणमप्रीणयत्तस्मैकः प्रथमायमानेषु महावीराय वैरायते ४३ वीरा सौ किमु न वर्ण्यते द
शमुखश्छिन्नैः शिरोभिः स्वयं यः पूजार्थं समुत्सुको घटयितुं देवस्य खट्वांगिनः सूत्रार्थे हरकंठसूत्रभुजगव्या-
कर्षणायोद्यतः साटोपं प्रमथैः कृतभ्रुकुटिभिः स्थित्वांतरे वारितः ४४ षु अखिलेषु मूर्धसु अग्नेः सकाशात्
स्फुटित्वा बहिरपकुंडाद्बहिर्भागे व्याकीर्णेषु समंताद्विक्षिप्तेषु सत्सु देवलिखितं रामार्पणं रामायार्पणं रामादस्य कालो
भविष्यतीति दृष्ट्वा अर्पणं कालवासयोरिति हैमी किंभूतेषु मूर्द्धसु जवात् उत्कृत्य कंठादुत्पाट्य हुतेषु ४३ खट्वांगो नरमं-
जरीत्यमरः सास्यास्तीति खट्वांगी रुद्रस्तस्य स्वयं छिन्नैः शिरोभिः पूजार्थे समुत्सुकः पुनः सूत्रार्थे सूत्रप्रयोजनं घटयि
तुं कर्तुं हरकंठे यः सूत्राकारो भुजगस्तदाकर्षणायोद्यतः तदा प्रमथै रुद्रगणैः साटोपं हास्ययुक्तं नर्तनं कृतं

साटोपंहास्यनर्तनमिति अंतरेरुद्ररावणयोरंतरालेस्थित्वायोवारितः कंठसर्पमागृह्णीषेति असौरावणः किंवर्ण्यतेशिरः पुष्पमालार्थंकंठभूषणाकर्षणार्थमितिभावः ४४ प्रकरणार्थस्तुस्पष्टएवअथवागर्थः प्रतिपाद्यते परमभक्तोहनूमान् आगतान्ब्रह्मादीन् भक्तिंबोधयति हेब्रह्मन् एषरामः अध्ययनस्य अध्ययनेनवेदादिनासमयः सम्यगयतीतिसमयोविषयः नअतः बहिर्देशेतूष्णींस्थीयतां यद्वश्यंतद्रामोनयतोवाचोनिवर्तंते अप्राप्यमनसासहेत्युक्तत्वात् हेअजडमतेबृहस्पतेस्वल्पंयथास्यात्तथास्तोकंजल्पवदएषावज्रिणोरामस्यसभाभक्तगोष्ठी कीदृशंस्तोत्रंसंहारःप्रलयः नारदः नयंतोविषयैर्विक्षिप्यंतेनराःप्राणिनस्तेषांसमूहोनारंतंददातिप्रकटयतीति नारदःसृष्टिसमयःपालितैःपालक

अत्रांतरेप्रविश्यप्रतीहारः ब्रह्मन्नध्ययनस्यनैषसमयस्तूष्णींबहिस्स्थीयतांस्वल्पंजल्पबृहस्पते
जडमतेनैषासभावज्रिणः स्तोत्रंसंहरनारदस्तुतिकथालापैरलंतुंबुरोसीतारल्लकभल्लभग्नस्त्वदयः
स्वस्थोनलंकेश्वरः ४५

तयास्तूयतेयस्यांसास्तुतिः पालनाख्यांसंहारसृष्टिपालनात्मककथालापैर्नालं किंतुनपूर्णं हेतुंबराख्यगंधर्वअत्रेकारप्रश्लेषः एलोपइतिसूत्रेणाईश्वरोरामः लंकेरणेसीतायारल्लकः शिरःसिंदूरसरणिः सएवभल्लकस्तेनभग्नोरावणास्तस्यत्वद्भ्यनाशकोस्ति तर्हिभयजनकः किंन्नेत्याह अयः शुभावहोविधिः भक्तजनमंगलंकरोतीत्यर्थः ननुसीतार्थंरावणघातात्किंकामीनेत्याह स्वस्थः सदास्वरूपस्थइत्यर्थः प्रकरणार्थः अवगम्यते शिरःसिंदूरसरणिः स्त्रीणांवैरल्लकः स्मृतइतिहलायुधः ४५ हेरावणअतिरुषागतप्रचंडकोपेनांगदस्त्वामपिकिमद्यैवनहन्यात् अपितुहन्यादेवपरंत्वहनने हेतुत्रयमस्तितदाह तातकक्षावशिष्टोसि यस्तातेनानुकंपयात्य-

कस्तमहंनहन्मीति अहमपिप्रोत्थत्योत्पत्यउच्चैरुक्षिप्योक्षिप्यपादाभ्यांप्रहतानि ताडितानिशिरांस्येवकंदुकास्तैःक्रीडि
तोस्मिपादप्रहतानि बाणेनहंतव्यानीति अतोहंस्वक्रीडनकभंजनेनलोकापवादभयान्नहन्मीतिभावः ननुस्वामिद्वे-
ष्टा हंतव्यएवेतिचेत्तत्राह देवोरामः तैःशिरोभिःउचितबलिंकरणीयादकूपालबलिंकरिष्यत्यतोनाहंहन्मिकिंभूतैःस्फू-
र्जेति दिव्यारुणाणियत्रतस्यबाहोरामभुजस्ययोव्यतिकरः कोपस्तेनविगलंत्यः कंधराः येषांतैः ननुबलिप्रदानेनास्य
किंभविष्यतितत्राह भूतानांसंघातंसमूहंशासितुंशीलंयस्यसः अन्यानपिबलिदानक्रियांशिक्षयितुमितिभावः ४६

अंगदः क्रोधंनाटयति स्फूर्जोद्दिव्यारुणबाहुव्यतिकरविगलत्कंधरैस्तैःशिरोभिर्देवोरामः करिष्यत्यकांचि
तबलिमयंभूतसंघातशासी हन्यात्किंनांगदस्त्वामितिपरुषरुषातातकक्षावशिष्टःप्रोद्धृत्योत्थत्यपादप्र
हतबहुशिरः कंदुकैःक्रीडितोस्मि ४६ अस्तिमत्स्यस्तिमिर्नामशतयोजनविस्तरः तिमिंगिलगिलोप्य
स्तितद्गिलोप्यस्तिराघव ४७ मूर्ध्नामुत्कृत्यकृत्ताविरलगलगलद्रक्तसंभूतधाराधौतेशांघ्रिप्रसादोपनत
जयजगज्जातमिथ्यामहिम्नां कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणांदोष्णांचैषामि-
दंतेफलमिहनगरीरक्षयोयत्प्रयासः ४८

अन्यार्थंगौरवेणरावणंरामंस्मारयति अस्तीतिस्पष्टमम् ४७मू
र्धोत्कर्तनसाहसेनदोष्णांभारोद्धरणगर्वेणयस्त्वंनगरीरक्षणंकर्तुमर्हसिचेत्तत्राह हेरावणएषांमूर्धमस्तकानांच
पुनः दोष्णांविंशतिभुजानांचफलमिदंभारोद्धरणंचेति तदेवफलंद्योतयति उत्कृत्यस्कंधादुत्पाट्यकृत्ताःखंडिताः-
अविरलाःनिबिडाःगलाः कंठास्तेभ्योगलद्यद्रक्तंतस्यप्रभूताप्रचुराया धारातयाधौतौप्रक्षालितौईशस्यरुद्रस्यांघ्री त

योः प्रसादेनोपनतः आशीर्योजयस्तेन जगति जातः मिथ्यैव महिमा येषां मूर्ध्नां किंभूतानां दोष्णां कैलासस्य गिरेर्यो उ
ल्लासनेच्छा तदुद्धरणेच्छा तस्याः यो व्यतिकरः अशौर्यैशौर्यारोपः तस्य पिशुनः सूचकाय उत्सर्पी प्रसरणशीलो दर्पस्ते
नोद्धुराणां प्रचंडानां एवंभूतानां मूर्ध्नां दोष्णां च फलं इदमेव शिरः कर्तन साहसं भारोद्वहन प्रौढिश्चेति इहमदागमनेन य
न्मगरीरक्षणे फलं समयासः श्रम एवेति भावः ४८ वानराणां वाहिनीपतयो हनूमदादयस्तेषां महांतः चंचंतः
पेशलाः ये चपेटाः करतलप्रहारास्तेषामुत्तरैरुपर्युपरि कंदुकवद्वृत्तिभिर्मुष्टिभिः तत्तत्फलं तस्य तस्यानयस्य फलं ल-

सीतां मुंच भज स्व रामचरणं राज्यं चिराद्भुज्यतां देवाः संतु हविर्भुजः परिभवं मा यातु लंकापुरी नो चेद्वान
रवाहिनीपतिमहाचंचच्चपेटोत्तरैस्तत्तन्मुष्टिभिरंग संगरगतस्तत्तत्फलं लप्स्यसे ४९ दृष्टः किं रघुनंदनो न हि
पुरा किं च त्वया न श्रुतोऽरण्ये किं न विलंबितोऽसि न पुनर्मार्गो स्थितोऽसि क्षपाम् तल्लंकेश्वर मुंच मानमखिलं श्रुत्वा
वधं वालिनः सीतामर्पय रक्ष राक्षसकुलं दासत्वमंगीकुरु ५० क्षेपकः रावणः मरुत्वद्दंभोलिक्षणघटितपी
नस्वयथुना निसर्गोदग्रेण प्रसभमसुरसापीतगगनः श्रियं देवद्रीचीं निजभुजवनोद्दामकरणीमयं कुर्वन्-
वीरः स्मरसि कथमासीद्दशमुखः ५१

प्स्यसे प्राप्स्यसि ४९ ५० भोंगद त्वं स्मरसि अयं मल्लक्षणो दशमुखः वी
रः कथमासीत् एतदेव वीरत्वं बोधयति किं कुर्वन् देवद्रीचीं देवान् अंचति गच्छति पूजयति वा देवद्रीची तां देवश्रियं प्रसभं य
थास्यात्तथा निजभुजा एव वनं तत्रोद्दामकारिणीं मत्तमतंगजीं कुर्वन् सन् देवानंचति देवद्र्यङ् स्यमरः यथा गृजीव
नमाश्रयति तथेर्यां निसर्गोदग्रेण स्वभावादुन्नतेनोरसा पीतगगनः आश्लिष्टाकाशः कीदृशेनोरसा मरुत्वानिंद्रस्त

स्यदंभोलिर्वज्रंतेनयोक्षणः योगस्तेनघटितोनिर्मितःघोरश्वयथुः शोथोयत्रतेनवज्रादपिशोथमात्रयुक्तंनक्षतं ५१
पुनरात्मनोरौद्ररसावेशमाविःकरोति आस्कंधादिति स्कंधमभिव्याप्य कंठाएवकांडावृक्षस्कंधास्तेषांविपिने-
दशाशिरोरूपेमयैवचंद्रहासासिनाच्छेत्तुंप्रक्रमितेकर्तनंप्रापितेसति कीदृशे झटितिशीघ्रंत्रुट्यतीशिरःसंततिः
शिरोनाडीपरंपरायस्य एवंसतिदशास्ववक्रेषुएकमपिवक्रंमुखंयदिअस्मेरंस्मितरहितंगलिताश्रुत्यक्ताश्रु वागद्ग
दवचोवाभग्नभ्रुभग्नावक्राभ्रूर्यत्रततत् अभूज्जातं तत्तत्रशिवः स्वयमेवप्रमाणंसाक्षी एतेनातिरभसोद्योतितःग

आस्कंधादपिकंठकांडविपिनेद्राक्चंद्रहासासिनाच्छेत्तुंप्रक्रमितेमयैवझटितित्रुट्यच्छिरःसंततौ अ
स्मेरंगलिताश्रुगद्गदवचोभग्नभ्रुवायद्यभूद्वक्त्रेष्वेकमपिस्वयंसभगवांस्तत्रप्रमाणंशिवः ५२ येहंपूर्वि
कयाप्रहारमभजन्मांछिंधिमांछिंधिमांछिंधीत्युक्तिपराःपुरारिपुरतोलंकापतेर्मौलयःतेभूमौपतितताःपुनर्नव
भवानालोक्यमूर्ध्नोपरान्यांचिष्यतइत्याहिनावयमितिप्रीत्याट्टहासंव्यधुः ५३मूलेपंचततस्त्वतुर्थमि
तिस्ववक्त्रसंनिवेशैःशिरःपुष्पैरन्यतभावलोकनमितेरुच्छोणितैरर्चति हस्तस्पर्शवशेनमूर्ध्निदशमंमूर्धान
मालोकयन्नृशंभोरद्भुतसाहसैकरसिकःकेर्नस्तुतोरावणः ५४ गद्गदोभयहर्षाभ्यां अत्रभयात् वयमेतादृशाःस्फू
राःशिरसांकर्तनेच्छेदेपिनकातराइतिभावः ५२येमूर्धानःअहंपूर्विकया अहंपूर्वमहंपूर्वमित्यहंपूर्विकामतेतिप्रहार
मभजन्पुरारेरुद्रस्यभूमौपतिताःसंतःतेमौलयःपुनःममनवभवान्मूर्ध्नःअवलोक्यइति प्रीत्याट्टहासंव्यधुःकृतवं
तःइतिकिंइमेनवभवारुद्रंवरंयाचयिष्यंतेवयंनेति एवंभूतःसाहसिकोहमितिभावः सप्तयामर्षःपुनःपुनस्तदेव

मलपतीतिविज्ञेयं ५३ अद्भुतोयः साहसस्तस्मिन्नेकोरसोयस्यसः एवंभूतोरावणः कैर्नस्कृतः अपितुसर्वैरेवद्यु
सद्भिः स्रग्जिमालायांसंन्निवेशोयेषांतैः शिरः पुष्पैः शिरांस्येवपुष्पाणितैः शंभोरुद्रस्यमूर्ध्निअंचतिसति हस्त
स्पर्शविशेनइतिदशमंमूर्धानंस्वकीयमालोकयन्इतिकिं मूलेपंचशिरांसि ततअग्रेचतुष्टयंशिरश्चतुष्कं अतश्च
तुष्टयेपंचमंशिरोमृग्यतेइतिकोहृत्वोः अन्यतमोदशमस्तदवलोकनमितैःमासैः वयंनवैवदशमः कुत्रेतिपुनःपुनःउ-
च्छोणितैः उत्फलद्भक्तैः ५४ एषः लंकेंद्रोरावणः समाश्वतेधीराश्वसाधारणधीराणांमध्येयवीरावीरत्वेनोत्कटास्ते-

लंकेंद्रः समधीर वीरपदवीरम्योनगम्योगिरिस्तस्मिन्नजुव्हतिचंद्रहासशकलान्मौलीन्पुरारेः पुरः भी-
त्यामंदशिखोदयोपिदहनस्तैरेवतत्रक्षणम्प्राणाग्यैर्भ्वोदिदृक्षया तन्नुतनुश्वासानिलैर्दीपितः ५५ अंग
दःसावज्ञम् आस्तांमस्तकहोमविक्रमकथापौलस्त्यविस्तारिणीदेहंकिन्ननिपातयंतिदहनेवैधव्य
भीताःस्त्रियः कैलासोद्धरणेनभारवहनप्रौढिस्त्वयाविष्कृतातान्नूर्णवर्णयकिंचाकिंचिदपरंयत्पौरुष-
स्यास्पदम् ५६ षांपदव्यांमार्गेरम्यः स्पृहणीयः धीरावीराअपियंस्पृहयंति गिरिस्मिकूटारव्यः रम्योन
दुर्गवर्त्मनास्यवीरत्वमितिभीता तस्मिन्रावणे पुरारेः रुद्रस्यपुरः अग्रे चंद्रहासकृतखंडान्मौलीन्जुव्हतिसति द
हनोग्निर्भीत्यारावणशिरांसिकथंदहेयमितिभीत्यामंदशिखोदयः मंदज्वालोदयः पुनः तैरेवप्राणाद्यैरिंद्रिय
गणैर्दिदृक्षयाकथमेतानिशिरांसिआत्मानंदाहयंतीतिज्ञानेच्छयामंदमंदश्वासानिलैर्दीपितः इंद्रियाणांक्षणंनिराश्र
यावस्थानत्वात्तैरेवकृतशिरः संचारंकृत्वाग्निरुद्दीपितइतिभावः ५५ रावणस्यविक्रमद्वयमस्तिमस्तकहोमः कैलासो

द्दूरणंचेति तद्द्वयंनिराकरोति आस्त्ताभिति सर्वस्फगमम् ५६ तदसंधिंज्ञात्वाजगभिषुरंगदोरामबीर्यंस्मारयति दोर्दं
डेति योराजबीजांतकः क्षत्रसंतानसंहर्त्ता जामदग्न्यः परशुनाकुठारेणयद्बाहुवनं यस्यराज्ञः भुजवनंअच्छिनत्
अलुनत् बाव्हेविनमिति निपातः सिद्धः कामधेनो तस्यकस्ययस्मिन्राजन्यर्जुनेपुलस्त्योमुनि दोर्दंडेष्वाहतः प्रा
पितः बन्धाय पौत्रोविश्रवः सुतोरावणास्तन्मोचनार्यभिक्षुरभवत् पौत्रजीवनदानभिक्षांयाचितवानितितस्यशौ
र्यरसांबुधेर्वीररससागरस्यभृगुपतेः शौर्यमेवजलंतत्तेजोवडवानलस्यरामप्रतापवडवाग्नेः ग्रासश्चुलकमात्रमपि

दोर्दंडाहितपौत्रभिक्षुरभवद्यस्मिन्पुलस्त्योमुनिः सत्वद्वाव्होर्वनमच्छिनत्परशुनायोराजबीजांतकः
शौर्येशौर्यरसांबुधेर्भृगुपतेर्ग्रासोपिनासीज्जलम् तत्तेजोवडवानलस्यकिमसौलंकापतिः पल्व
लम् ५७ रेरेराक्षसराजमुंचसहसादेवीमिमांमैथिलींमिथ्याकिंनिजपौरुषस्यघटनामागल्भ्यमारभ्य
ते एनांपश्यसिकिंनकिन्नरगणैरुद्गीतदोर्विक्रमांसेनांवानरभर्तुरुद्भटभुजस्तंभाग्रभीमांपुरः ५८

नासीत् असौपल्वलमल्पसरः लंकापतिःकिंनकिमपीति एतदंतरंत्वद्रामशौर्ययोरितिभावः ५७ एवंरामबीर्यमाश्राव्य
तदनुगवीर्यंश्रावयति रेरेराक्षसेति वानरभर्तुः सुग्रीवस्यउद्भटायोद्धारोयेवानरास्तेषांभुजाएवस्तंभाग्र्याः मुख्यस्तंभा
स्तैर्भयावहांअन्यत्सुगमम् ५८ इतिश्रीमिश्रमोहनदासविरचितायांहनुमन्नाटकटीकायामष्टमोंऽकः ८ कटकोस्त्री
नितंबोद्रेरित्यमरः सुवेलाख्यगिरिनितंबप्रदेशेसाटोपंयथास्यात्तथालंकापतेरर्धंकराः दशहस्ताः धनुष्टंकारैः ककुभः परि-
पूरयंति तथाकोक्षिप्यंतेइतिकौक्षेपकाः बाणास्तान्प्रोच्छंतिविमलीकुर्वंति पुनरर्द्धकराः चित्रफलकैः चित्राकृतिभिस्त

त्यसिद्धं वैदेहीकुचपत्रवल्लिरचनावैदग्ध्यं अभ्यस्यंति अथवागर्थः प्रतिपाद्यते करः कीनाशहस्तयोरिति हैमी अर्धकराः
अर्द्धवानराः श्रुत्वासंस्थाप्य श्रुकुनिष्ठायामिति कामधेनौ पूर्वार्द्धं पूर्ववदन्ये चित्रफलकैः चित्रितफलकैः फलमाकृतिभल्ल
योरिति हैमी लंकापतेः कुचपत्रवल्लिरचनावैदग्ध्यं कुर्वन् कुचसंकोचइति कामधेनौ रावणस्य संकोचायवैपत्रवल्लिरचना
चंदनमालानिमार्णवैदग्ध्यम् यथा चंदनमालयामंडपादिरवरुध्यते तथास्यरोधनविधानमिति प्राण्युत्सा होतु देहिनादि

इतिलंकाभटमुकुटवाक्यैरधिक्षिप्य लंकामातंकयन्नंगदो निष्क्रांतः इतिश्रीहनुमन्नाटके अष्टमोऽङ्कः
८ अथनिजमतापप्रचंडप्रचंडसमरोत्साहपरिपूर्णस्य लंकापतेः श्रुत्वादाशरथिः स्फवेलकटकेसाटोपम
र्द्धधनुष्टंकारैः परिपूरयति ककुभः प्रोच्छ्वंति कौक्षेपकान् अभ्यस्यंति तथैव चित्रफलकैर्लंकापतेरस्तसु
नवैदेहीकुचपत्रवल्लिरचनावैदग्ध्यमर्धकराः १ ततो निजराजमंदिरशिखरवरस्थमंचमारुह्य लंकायां
कृतवान्यो हि विकृतिं दग्धाग्रपुच्छः पुराकोप्येषः प्रतिभाति वालिसदृशो नूनं तदीयः सुतः श्यामः का
मसमाकृतिः शरधनुर्धारी ससीताप्रियः प्रत्येकं रिपुमीक्षतीति निगदन्मंचस्थितो रावणः २ तिशाश्वतः
लक्ष्मीरीकारउच्यते इत्येकाक्षरः रावणोत्साहशोभा संकोचायपत्रवल्लीरचनावैदग्ध्यमिति वैनिश्चयेन १ एषः पुरा-
लंकायां विकृतिं दाहरूपां कुतो ज्ञातमित्यत आह दग्धाग्रपुच्छः एषः कपिः प्रतिभाति तदीयः सुतः वालिपुत्रः क
थं ज्ञात इत्यत आह वालिसदृश इति शरधनुर्धारी कः सीताप्रियः प्रत्येकं रिपुमीक्षतीति निगदन्निति स्वयमेववित्त
स्यं निगदन्सन् प्रत्येकं रिपुं निगदन्सन् रावण ईक्षतीति ज्ञेयम् २ राघवमेवेत्येवपदेनासहायत्वं द्योतितम् मुहुः आत्मपक्षविजयं कांक्षंती

चकारान्मुहुः परपक्षभंगंकांक्षंती मुहुर्धावंती अंतरालपतिता आसीदिति शेषः। अतएव मुग्धा अज्ञा देवमजानतीत्यर्थः कदाचि-
दिहे कदाचिद्रावणाभ्यासे एषएवांतरालः एकत्र स्थित्यभावादिति॥ ३॥ धावनमेव द्योतयति इयं मंदोदरी आत्मचरणारविंदगतरेणू-
त्करान्कर्करतामनैषीत् प्रापयामास किंविशिष्टान् वंदारुरभिवादके त्यमरः वंदारूण्यभिवादकौ नियानि वृंदारकवृंदानि देवस-
मूहास्तेषां या वंदी रुद्धस्त्रीगणस्तच्छिरस्थितायां मंदारमालापारिजातपुष्पस्रक् तस्या मकरंदबिंदवो येषु मकरंदरेणुयोगात्कर्कर

वंदारुवृंदारकवृंदबंदीमंदारमालामकरंदबिंदून् मंदोदरीयं चरणारविंदरेणूत्करान्कर्करतामनैषीत् ४ अं-
जलिं बध्वा मंदोदरी रावणं वैरिविद्रावणं विज्ञापयति देवत्वं बाहूद्धृतचंद्रशेखरगिरिर्भ्राता जगद्दस्मकः पु-
त्रः शक्रजयीत्यवेत्य रणाधीर्नूनं बली वालिजित् तद्राजन्नबला वनादपहृता देयास्य या जानकी लंकायां
रहसीत्फयाच वचनं मंदोदरी मंदिरे ५ रावणः निजभुजाडंबरं नाटयति किंते भीरु भियानिशाचरपते
र्नासौ रिपुर्मे महान्यस्याग्रे समरोद्यतस्य नक्षः शास्तिर्धृतिशक्रादयः मद्दोर्दंडकमंडलोद्धृतधनुःक्षिप्ताः
क्षणान्मार्गणाः प्राणानस्य तपस्विनः सतिरणे नेष्यंति पश्याधुना ६ त्वं यच्चरणारविंदे निपाठे यस्य रावणस्य च-
रणारविंदयोरेणूत्करास्तान्वृंदारकाणां बंदीरुद्धदेवगणानां चरणपीडनात् मकरंदबिंदवः मंदोदरी धावनाद्रेणवः ४ मंदोदरी लंका-
यां तत्रापि मंदिरे तत्रापि रहसीति वचनमुवाच तदेवाह हे देव कांत त्वमिति अवेत्य ज्ञात्वा रणधीः रणोत्कोयानः तथापि वालिजिद्वि-
पक्षः वालिजेता रामो बलीति सगर्भाक्षेपः इति किं बाहूद्धृतरुद्रालयो हं जगद्दक्षको भ्राता इंद्रविजयी पुत्र इति तत्तस्मात्पूर्वं सैबाबला
ततोपि वनाच्छून्यादपहृतानप्रत्यक्षं अतो रामाय देयेत्यभिप्रायः ५ हे भीरु भयशीले तेभिया किंन किमपीति राक्षसाधीशस्य मे असौरा-

मोमहान्रिपुर्नयस्यममाग्रेअस्यतपस्विनः रामस्यप्राणान् ऽगमंतदेवाह असौनापुमान्रामः महान्निपुरक्तिरामस्याग्रेमद्भुजमंड-
लीधड्डुः ततः प्रेरिताःअस्यतपस्विनः रिपुघातिनो रामस्य बाणाममप्राणान्नेष्यंतिअतोभियाकिमितीत्यवगम्य ६ एकःअसहायः त
त्रापिसुग्रीवभृत्यः रामभृत्यभृत्यइति पत्तनंनगरंवनंच दग्ध्वातूष्णींगतवान्वागाडबरयथास्यात्तथा यातःगतः तदाभवतोवी
रवर्गैः बस्कृतस्त्वयापिकिंकृतंनकिमपीतिअसौरामः ऽगमत् ७ शिबिरंकटकं ८ संप्रतिविपत्कालेप्रतिभटाः शत्रवस्तान्प्रतिमो-

मंदोदरीसभयं रावणोदितपद्यार्थमपश्यतीभाविनाहूतीयंपद्यार्थमवगम्य अहोप्राणनाथलंकेश्वरकिमिति
स्वकपोलकल्पितैरमंगलालापैरास्मनोवधंमन्यसे शांतंपापंप्रतिहतममंगलमितिवैनिश्च्यसुखाद्य एकःसुग्रीवभृ
त्यः कपिरखिलवनंपत्तनंचापिदग्ध्वायातस्तूष्णींतदानींदशमुखभवतःकिंकृतंवीरवर्गैः भ्रासोसौपत्तनांनंसकल
कपिबलैर्वार्धिमुल्लंघ्ययोद्धुंत्वंसीतांमुंचमुंचेत्यनिशमकथयत्प्रेयसीरावणस्य ७ मंदोदरीकथनेनाकिंचित्सभयो
रावणः शुकंचसारणंवीरंदूतंप्रस्थाप्यरावणः रामदेवस्याशिबिरंमंत्रंचक्रेथमंत्रिभिः ८ तत्रविरूपाक्षनामामा
त्रीसहितं देवत्वांप्रतिसंप्रतिप्रतिभटप्रोल्लासनंनोमुदेदेवायंप्रतिपद्यतेहितमिदंयस्माद्वयंमंत्रिणः सीतारक्ष
णदक्षलक्ष्मणधनुर्लेखापिनोल्लंघिताहेलोल्लंघितवारिधिःकपिकुलैःसार्द्धंसरामोमहान् ९

ल्लासनंमुद्रापप्रेरणंनोस्माकंमुदेन अमंत्रदानादिहापयशः परत्रनिरयावहंचेति तत्रबलाबलाख्यानेनहितमवद्योतयति सीते
त्यबलत्वं हेलोल्लंघितेनिबलवत्वं अन्यत्ऽगमम् ९ ननुरामंपरीक्ष्यदास्यामीतिचेन्न अद्यैवदेहीत्याशयेनाह यावदितिपश्य
सीतिप्रत्येकमनुबध्यते निरस्तावित्रस्ताअलकाराक्षस्योयस्यांनिजानुजंबिभीषणम् ऽमंत्रोपदेशकर्तृत्वात्ऽचरितमित्कृतम्

ननु यावज्जीवंतामनुभवामि ततो न मुंचामीति चेन्न अनघां निष्पापां त्वया स्प्रष्टुमप्यशक्यां १० एते इति जीवद्भिः चिरशरीरधारणावद्भिः अथ चादर्शनाभावे किन्न श्रूयते हा हृयार्थे वा ह्युयं वा वाकष्टं कष्टं हतहा वा यता: समा इति हेमी। ११ आज्ञेति शक्रशिखामणि: मुकुटोपरि मणिवत् राजमाना शासनग्रहाणां ये केचन इह शास्त्रग्राहिणस्तेषामपि प्रणयिनी सादरं ग्राह्यात वा आज्ञा लंकेति पदं वासस्थानं द्रुहिणो ब्रह्मा तदन्वये ब्रह्मपौत्र विश्रवसः संभूतिर्जन्म तत्तस्मादीदृग्वशोऽन्यैर्न लभ्यत इति चेत् एष त्वल्गुण

यावद्दाशरथेर्न पश्यसि मुखं यावन्न पाथोनिधिं बद्धं यावदिमां न पावकभ्रशां लंकां निरस्तालकाम् यावन्नैव निजानुजं स्फुचरितं यातं कुलांगारतां तावद्रावणलोकपालतरसा सीतां प्रयच्छानघाम् १० रावणः साश्चर्यं एते तेमबाहवः स्फुरत्प्रतेदोर्दंडकंडूहराः सोऽहं सर्वजगत्सराभवकरो लंकेश्वरो रावणः सेतुं बद्धमिमं शृणोमि कपिभिः पश्यामि लंकां हतां जीवद्भिर्नहि हि दृश्यते किमथवा किं वा न वा श्रूयते ११ विरूपाक्षः राजन्विषादं मा गाः पश्य आज्ञा शक्रशिरोमणिः प्रणयिनी शास्त्रग्रहाणामपि भक्तिर्भूतपतौ पिनाकिनि पदं लंकेति दिव्या पुरी संभूतिर्द्रुहिणान्वये च तदहो नेदृग्वरान्लभ्यते स्याच्चेदेष न रावणः क्वनु पुनस्त्वेकत्र सर्वे गुणाः १२ रावणः धैर्यमवलंब्य मतिर्विपश्चितां मंत्री रतिर्मैत्री विलासिनाम् पराक्रमैकसाराणां मानिनां त्वसिवल्लरी १३

णो न स्यात्तर्हि सर्वे गुणाः एकत्र क्वनक्वापीति १२ मतिरिति शास्त्रविचारसमुत्थं निर्धारणसामर्थ्यं तो मतिर्मता विबुधैरिति रसोदधौ विपश्चितां ज्ञानिनां विलासिनां कामिनां मानिनां चित्तोन्नतिमतां असिवल्लरी खड्गधारा अतोऽस्माकं खड्ग एव मंत्री भवन्मंत्रस्तु ज्ञात एवेति भावः १३ ❀ ❀ ❀ ❀ ❀

तत्ररणएवमंत्रइतिनिर्णीतमाक्षिपति राजन्नितिसुरवस्करवाः वाचैवस्करवंयेभ्यस्तेषांवाचसुरवस्करवाः किमाक्षेपे ताः वाचः ए
ताः वाचः व्यसनसंगमेदुःरवागमेसति तवक्षोदक्षमाः दुःरवसहनयोग्यानक्षोदः संकटचूर्णयोरितिहैमः यद्वा व्यसनसंगमे
द्यूतपानाक्षस्त्रीमृगयादियास्वापादयो व्यसनानि तद्योगे यद्वा सुरवस्करवाः वाचः मधुराः १४ प्रियाइतिश्रीरक्षणेराज्यैश्वर्यपा
लनेस्कगमम् १५ विभवेइतिविपत्तौसत्यां अन्यत्र नीहृद्दलरवागतेसति १६ त्वंतुमंत्रदानानर्होसीत्याह अग्रेइति शीघ्रागत

अथमहोदरोनाममंत्री राजन्सुरवस्करवावाचोमधुराः कस्यनप्रियाः तवक्षोदक्षमाः किंतुनैताव्यस
नसंगमे १४ प्रियावामधुरावाक्कहर्म्येष्वेवविराजते श्रीरक्षणेप्रमाणांतु वाचः स्कनयकर्कशाः १५ वि
भवेष्वोजनेदानेतिष्टंतिप्रियवादिनः विपत्तौचागतेन्यत्रदृश्यंतेखलुसाधवः १६ अग्रेप्रस्कतनाशा
नांमूकतापरमोगुणः तथापिप्रभुभक्तानामौरवर्यादिदमुच्यते १७ यैरेवस्तुतिभिः स्वामीप्राप्यते
व्यसनाटवीम् पश्चान्मूकत्वमापन्नेरुद्धर्तुंशक्यते कथम् १८ नद्यश्चरवलमैत्रीच लक्ष्मीश्चनि
यतिर्द्विषाम् सुकुमाराश्चवनिताराजन्नस्थिरयौवनाः १९ दत्तोत्साहेरकार्येपिवित्तग्रहणको
विदैः सेव्यैर्विदग्धैर्भुज्यंतेनृपाः कर्णांतषट्पदैः २०

मरणानांतथापिप्रभुभक्तानांप्रभुप्रियकारिभिर्मंत्रिभिः मौ
रवर्याद्धार्ष्ट्यात् इदंवक्ष्यमाणं १७ यैरितियैर्मंत्रिभिः असद्गुणारोपणं स्तुतिः अटवीवनपंकयोरितिहैमः दुःरवपंकादुद्धर्तु
म् १८ ननुभवतुव्यसनानितरुणीयंकथंत्याज्येत्यतआह नद्यइतिद्विषंतीतिद्विषः निर्निदानाऽप्रियकर्तारः तादृशास्तेषांनियति
र्भाग्यम् ऐश्वर्यंयौवनमभिवृद्धिः १९ दत्तेतिदत्तोत्साहैः कथयति अकार्येअनुपस्थितकृत्ये यद्वा अकरणीयेकर्मणिविदग्धैः क

५८

र्णंतिषट्पदैर्मधुकरमालावत्कर्णाभ्यर्णरसिकैः चित्तग्रहणेतिवापाठः २० नन्विंद्रादिजयिनोममकेवानराइतिचेत्तत्राह पद्मि
नीति दिवापद्मिनी कांतिमापेदे कुमुद्वतीसं चुकोच रात्रौकुमुद्वतीकांतिमापेदे पद्मिनीसंचुकोच एवमेवः क्ष णाद्दूपदः क्ष
णात्संपदः अतस्तवाद्यविपत्कालइतिभावः मंत्रामननत्वादैश्वर्यातिशयाच्च पतनांताः समुच्छ्रयाइत्युक्तत्वात् २१ स्फुरे-
ज्येति स्फुरेज्योगुरुः ऐहिकं इहैव स्फुरवदं आमुष्मिकं पारलौकिकम् ऐहिकामुष्मिकं इहामुत्र स्फुरवदम् २२ एषांन्यूनाधिक-

पद्मिनीकांतिमापेदे संचुकोचकुमुद्वती नभवंतिचिरंभायोसंपदोविपदोपिवा २१ तथाच स्फुरेज्यादिभि
राचार्यैर्नीतिशास्त्रंत्रिधामतम् ऐहिकंचामुष्मिकाख्यमैहिकामुष्मिकं तथा २२ ऐहिकामुष्मिकंतत्रशा
स्त्राणामुत्तमोत्तमम् आमुष्मिकंतूत्तमंस्यादैहिकंचाधमाधमम् २३ यज्ज्ञानात्स्वामिनंहत्वाभजंतेमं
त्रिणःश्रियम् विषशस्त्रादिभिः शास्त्रंतदैहिकमितिस्मृतम् २४ तुल्यः सूर्यद्विजवधे राज्ञाभंगोमही
भुजाम् तद्वधेयद्भवेत्पापंनशेषोवक्तुमर्हति २५ अपराधंविनामंत्रीप्रभुनापीडितोपिसन् नवैरूप्यंक
चिद्यातितदामुष्मिकमुच्यते २६ भावमाह ऐहिकेति शास्त्राणांनीतिव्यंजकग्रंथानांमध्ये २३ अथशास्त्रत्रयलक्षण
माह यदिति मंत्रिणोराज्यार्हाः भ्रात्रादयः विषदानंशस्त्रादिहननंआदिग्रहणात्तद्विपक्षाश्रयणंचेत्यादिभिर्मारणोपायैः २४
नन्वेवंचेद्राज्यप्राप्तिस्तर्हिसर्वैःकिंनकुर्युरित्यतआह तुल्य इति येषांमहीभुजामाज्ञाभंगएवसूर्यद्विजवधेस्तुल्यः वेदमार्गो
च्छेदःसूर्यवधः तदधिष्ठानृत्वात्सूर्यस्य सूर्याइतिपाठे सूर्यानवोढास्त्री वधैरितिबहुवचनात् वधाद्यत्रयआक्षिप्यंतइति
तद्वधेतेषांराज्ञांवधेशेषः सहस्रवदनोपि अतः कारणादैहिकनीतिशास्त्रंअधमाधममित्युक्तं २५ अथामुष्मिकमुच्यते अप

राधेपितिस्वाधिकारप्रमादोत्थअपराधस्तद्द्विनापीडितः कुचाकुदरिद्रादिप्रापितः येरूप्यंमंत्रिभावाभावम् २६ अथोहिका
मुष्मिकमुच्यते राज्येनि ऐश्वर्यानिशया ह्यातृखाह्याराज्यंगृहीतुंक्षमोपिसचिवः मनसापिकिमुतवाचाकर्मणावा २७ प्रा
संगिकमुक्त्वाप्रस्तुतमाह शुकश्चेतिद्वाभ्याम् अवीरः शुकःसारणोपि वीरः स्वाम्युत्सवाद्दत इतिवररुचिर्नीतो स्व
तनुंत्यक्त्वावानरीतनुमास्थाय तत्ररामकटकेहतोगतो हननहिंसागत्योःअधुनापिस्थितौशरीरव्यत्ययेनतत्सक्षाश्रय॰

राज्यग्रहणशक्तोपिमनसापिनचिंतयेत् सचिवः स्वामिनोनाशमैहिकामुष्मिकंहितत् २७ शुकश्चसा
रणोवीरश्चैहिकौमंत्रिणोतव वानरीतनुमास्थायहतौतत्रस्थितावपि २८ आवामामुष्मिकौराजन्
विरूपाक्षमहोदरौ मैथिलीदीयतांतूर्णंनोचेत्सहचरौतव २९ रावणः सभयंसशिरःकंपंस्वग॰
तमेवोच्यते नीतिशास्त्रमिदंश्रुत्वाकुंभकर्णः क्वचिद्बली हंतिचेन्मामतोयुद्धेप्रथमंप्रेष्यता म॰
यम् ३० विरूपाक्षमहोदरौप्रभोःशिरःकंपनादंतर्गतमभिप्रायमवगम्य नीतिशास्त्रविदोथ
र्मंकेवलंनृपतेःपुरः पठंतियुवराजादिपुरतोनकदाचन ३१

णाच्चैहिकौ २८ आवांतुनतथेत्याह आवा
मितिभवतापीडितयोरप्यावयोर्वैरूप्यंनास्तिइत्याह मैथिलीदीयतांतूर्णमिति ननुनददानेयुवयोः कामतिरिति चेत्त
त्राह चेन्नदास्यसितर्हि आवांतवसहचरौ यागतिस्तवसैवावयोरितिभावः २९ नीतीति क्वचित्कदाचित्प्रेष्यताम्
प्रस्थाप्यतां ३० अंतर्गताभिप्रायमवगम्यसीतान्नदास्यतिप्रत्युतकुंभकर्णाद्बिभेतीतिज्ञात्वामंत्रिणावूचतुरितिशेषः
नीतिशास्त्रेति नीतिशास्त्रनिर्णेतॄणांगुरौसति राज्यकृत् युवराजः ३१ ७ ७ ७

नेति कोपे दुष्टे दुरत्ययं दुरधिकारिणि कोपातिशये सति दुष्टस्य पुंसः शरीरे रक्तं न सर्पस्यापि मुखेन तस्य क्रोधविषाभ्यामव
शोषणत्वात् तथा दुरधिकारिणि दुष्टे नियोगिनि सति प्रजासु धनं न राजन्यपि न अंतराले गतत्वात् अतः कुंभकर्णाद्याश्रय
पान्न राज्यं त्वयि नास्मासु अतः को लाभ इति भावः ३२ नृपोप्यप्रमत्तः स्यादित्याह नियुक्तेति ते राजानो लं मूढधियः राज्य
करणाभावात् यैः स्वैरस्वच्छंदं ये विहारास्त एव साराः करणीयत्वेनोपादेया येषां एवंभूताः संतः स्वयं तिष्ठंति राज्यहृत्ता

हानाथ लंकेश्वर किमित्यावयोः शून्द्राधिकारिणो वैरूप्यशंकामंकुरयसि तेन्ये दुरधिकारिणः पापाः
उक्तं च नसर्पस्य मुखे रक्तं न दुष्टस्य कलेवरे न प्रजासु न भूपाले धनं दुरधिकारिणि ३२ आवामपि
दुरधिकारिणो न भवावः भवानपि मूढधीर्न तेन्येधिकारिणः पापा ये द्विषंति निजं पतिम् आवां त-
थाविधौ नैव भवान पि न मूढधीः नियुक्तहस्तार्पितराज्यभारास्तिष्ठंति ये स्वैरविहारसाराः बिडाल
वृंदाहितदुग्धमुद्राः स्वपंति ते मूढधियः क्षितींद्राः ३३ अपि च उत्खातान्प्रतिरोपयन् कुसुमितांश्चिन्व
न्लघून्वर्धयन् क्षुद्रान्कंटकिनो बहिर्निरसयन्विश्लेषयन्संहतान् अत्युच्चान्नमयन्नतांश्च शनकैरु-
न्नामयन्भूतले मालाकार इव प्रयोगचतुरो राजा चिरं नंदति ३४ ज्ञानमेवात्र स्वापः बिडालवृंदे आहिताः स्थापि-
ता दुग्धमुद्राः क्षीरपात्रं यैस्ते अत्र बिडालसाम्यं नियुक्तानां दुग्धस्य राज्यसाम्यमिति ३३ अथातिसंक्षिप्य राजवर्तनं दर्शयति उत्खा
तानिति उत्खातान् स्थानत्याजितान् प्रतिरोपयन् स्थानांतरं स्थापयन् कुसुमितान् पुष्पवतः चिन्वन् भृत्यद्रुमान् लघून् लघु
वृक्षतुल्यान् क्षुद्रान् अन्यवृद्धिमसहमानान् कंटकिनः पुनस्तापकारिकंटकद्रुमान् संहत्यास्थितान् दुर्भृत्यान् अत्युच्चान् स-

कलेश्वर्योन्नितद्दक्षान् नृपभावमारूढत्वात् नतान् आत्मानु कूलार्जवस्कंधान् भृत्यद्रुमयोः साम्यं ३४ अत्र नद्रुरुंरुद्रमेवोदाह
रति जीर्णेइति प्रुषदाहे प्रुष्टेदग्धेशात्त्याचंद्रादिसंग्रहं विनापिकालकूटादिकहननसामर्थ्यशक्तिस्त्वत्तोपिशद्रुसंग्रहंकरोसे
व विषाग्निकामानांकार्यवशात् लोकरक्षणसंहारेंद्रियजयः कार्यवशः तदर्थं चंद्रगंगोमाधारणं शद्रुसंग्रहः शात्त्यासमलंकृ
तइत्यकृत्वात् निष्प्रयोजनः कालकूटश्चेद्रेणाग्निर्गंगयाकामस्त्रियाशांतोभवतीतिनियमः शिवेतु एतादृशीशक्तिर्भवति यथाश
त्त्याशिवः चंद्रगंगाउमाइतित्रयंशद्रुसंग्रहं विनापिकालकूटाग्निकामान् दूरीकर्तुंसमर्थोभवति ३५ तवतुनीतिवैपरीत्यमुक्त

राजन्कार्यवशाद्दिरुद्रुसंग्रहोपिराज्ञा शद्रुनाशद्रुसंग्रहः प्रयोजनहीनोपिकर्तव्यः प्रयोजनंजनयति
क्वचित्काले अत्र भगवान्भवताभिष्टः प्रमाणमेणांकमौलिः जीर्णेप्युत्कटकालकूटकवलेप्रुष्टेहठान्म
न्मथेनीतेभास्करभालनेत्रतनुतांकस्मांतदावानलेयःशात्त्यासमलंकृतोपिशशिनंशैलात्मजांस्वर्धुनीं
धत्तेकौतुकराजनीतिनिपुणःपायात्सवः शंकरः ३५ दिग्वासायदितत्किमस्यधनुषाशस्त्रंचकिंभस्मना
भस्माथास्यकिमंगनायदिवसाकामंपरंद्वेष्टिकिम् इत्यन्योन्यविरोधिकर्मनिरतंपश्यन्निजंस्वामिनं
भृंगीसांद्रशिरावनद्धशकलंधत्तेस्थिशेषंवपुः ३६

मेव तवगुरोः शंकरस्यापिनीतिवैपरीत्यमालोक्यमं
त्रिचक्रचूडामणिर्यथाभृंगीतथावयमपीतियत्कुंरुद्रमुदाहरति देशिकगुणाः सच्छिष्यमाश्रयंतइति न्यायात् दिग्वासेति परमिसं
गनायोगेप्यजेयत्वात् कामेपरत्वमुक्तम् भृंगीनामगणश्रेष्ठः कीदृशंवपुः सांद्रानिबिडायानाड्यस्ताभिरवनद्धानिसर्वतोबद्धा
निशकलानिशिरः पादपाण्यादिखंडानियस्मिन्तत् भित्तंशकलखंडेवेत्यमरः ३६ ७ ७

अथात्मनो मंत्रिताशयं द्योतयन् भविष्यमाह ब्राह्मणमिति द्रोणं त्यक्त्वा तद्वाक्यमतिक्रम्य यथा दुर्योधनो भविष्यति तथा त्वमद्यैन वमाभवेत्यन्वयः द्रोणमेव विशिनष्टि प्रथमं ब्राह्मणं तत्रापि मंत्रिणं ननु केचित् मंत्रिणोपि परपक्षमाश्रयंत इति चेत्तत्राह शूरं तत्रा पि गुरुं हितोपदेष्टारं हे वीर दुर्निवाराग्रह श्वर समूलाशेषकुलक्षयो दुर्योधनस्य भाव्यः तथा तवापि वेति भावः स्रगमम् ३७ मैनइ ति हे प्रिये तवांगे सेनः मीनस्येवायं परिमलो मेनः भेदमाख्यातिकथयति विदेहदुहितुरंगे सरसीरुहाणां परिमलः भेदमाख्याती

ब्राह्मणं मंत्रिणं द्रोणं शूरं वीरं भविष्यति गुरुं दुर्योधनस्त्यक्त्वा यथा त्वं मा तथा भव ३७ अत्रांतरे मंदोदरी राव णेन सह खेलमाना स्मरस्मेरं चापी विलास लीलया अशोकवनिकामागम्य जानकी स्थानमाक्रम्य स्योपविश्या ह प्राणनाथ लंकेश्वर पश्य मंदोदरीजनकजांगमनोहरत्वे भेदोस्ति कोपि यदि नाथ विचारय त्वं रावणः मे नः प्रिये परिमलस्तव भेदमाख्यात्यंगे विदेहदुहितुः सरसीरुहाणां ३८ रूपेतवास्याश्च न कोपि भेदः खेदं प्रि ये मद्वचनेन मागाः सीताधरे वामधुरे दशास्यो रामो रमिष्यत्यथवाथ सद्यः ३९ मंदोदरी सकरुणालंकामधिक्षि पति बिभीषणः पापकथानिमग्नः स्वापाकुलो भूद्यदि कुंभकर्णः राजाभिमानी पतितः कलंके लंके निमग्नासि गभीरपंके १४

ति भेदः ननु रूपादौ ३८ इत्युक्ते किमपि विमुखं दृष्ट्वा पुनराह रूपेइति हे प्रिये तव अस्याः सीतायाश्च स्रगमम् वागर्थः प्रतिपाद्यते रा मः अद्यैव एवार्थे वाशब्दः राम एव वा सीताधरे रमिष्यति दशास्यो रावणः सद्य एव वामधुरे वामाः मांसाशिनस्तेषां धुरं वहतीति वामधूः संग्रामस्तं प्रतिरमिष्यति शयिष्यतीत्याक्षिप्यते कर्मणि चतुर्थी धामोस्त्री मुग्धयुद्धयोरिति नाममाला अन्यत्पूर्ववत् ३९ प्रतिपक्षाश्रयणाल्लंकाभंगे प्रकृत्समेव पापकथा तत्र निमग्नः त्वं यदीति निश्चये कलंके पापे सीताभिलाषरूपे ४०

इतिहनुमन्नाटकेटीकायांनवमोंकः ९ प्रकरणंस्पष्टमेव राक्षसान्त्रावयीतिरावणोरामः इतिलक्षणयोरन्वित्यव्ययवृत्तौ लं
केश्वरस्यानुवृत्तिंप्रतिजीवितुंशीलंयेषांतेलंकेश्वरमरणार्थंवाजीवनंयेषांते भोवानराः मायावंचनयुद्धयोरितिविश्वः युद्धप्र॰
पंचरचनाभिः अथेति तयोःरामलक्ष्मणयोरूपलावण्यताभ्यांपूर्णेअचेतन्याद्विपरीतनेत्रे स्रगमम् अथवागर्थः प्रतिपाद्यते र
जनीचरेस्वप्ने रक्षःस्वप्नौनिशाचरावितिहैमी अचितशिरसीअचितअजितात्मारावणस्तस्यमस्तके अजितात्माचितोवशइ॰

इतिनिष्क्रांताःसर्वे इतिश्रीमन्महानाटकेहनुम॰मंत्रिवाक्यंनामनवमोंकः ९ ततःसुंदरमंदिरंप्रवि॰
श्यरावणःसानुचरः भोभोलंकेश्वरानुजीविनोजनाःशृणुत अहमिदानींमायाप्रपंचरचनाभिर्जानकीं
मृदुसुरभिस्रुवर्णस्फीतदोर्मूललालित्यविराजमानपीनोन्नतकुचकलशोपशोभितोरस्थलेरेवलमान
स्तन्मधुराधरंपास्यामि मायाविनोनुचराःयद्रोचतेदेवस्य रावणः अथरजनिचरेशोरामसौमित्रमा॰
यांविरचितशिरसीतद्रूपलावण्यपूर्णे गलदविरलरक्तेप्रेतपर्यस्तनेत्रेजनकदुहितुरग्रेस्थापयामा॰
सपापः १ जानकीसबाष्पंशिरःसरसीरुहद्वयमालोकयंती अहहजनकपुत्रीफुल्लराजीवनेत्रीनयनस
लिलधारागर्भनिर्मुक्तहारा रमणमरणभीतामृत्युनाकिन्ननीताहृदयदहनजालःसंदहेहाविशालः २

तिविश्वः ईशःजनकदुहितुरग्रेस्थापयामास एर्यलोपइतीकारलोपः कीदृशइत्यपेक्षायामाह रामसौमित्रिरूपेणमायया आविःप्र
त्यक्षः एकंशिरोरामः एकंलक्ष्मणइति लक्ष्मणोमेघनादंहनिष्यति रामोरावणमितिव्यंजकंआत्मावैपुत्रइतिश्रुतेः पंधर्ममासमंततः
पातीतिपापःधर्मपः पोरक्षियांधर्मयमयोरित्येकाक्षरी १ अहहेति अहहइतिखेदे संदहन् संदहतु लोडर्थेलिङ् स्रगमं वागर्थःस्व॰

प्रेसीतावदति हेरामरमण जनकप्रुच्यहं मृत्युकनारावणाकाले नभ वता आत्मसमीपं किंन नीता कीदृशी मरणभियं प्रापिता
अतोऽत्हृदयदहनजालस्त्वद्वियोगाग्निः किंनसंदहेत् अपितुसंदहेदेव चार्थेयाच कारास्तुनः किंनेनिग्रहणम् २ प्रकरणार्थः
स्पष्टः वागर्थः हेतिकष्टं अन्नुभूतंभवता अधरेति तीरेनदीतीरे योवानीरकुंजस्तत्र अमृतपरिपूर्णचंद्रमंडलं शीर्णंगतरसं
किंत्वधरामृतंतु नवीनत्वात्सरसमितिभावः जरठारसयोःशीर्णमिति हैमी अर्कः सूर्यस्तमइयांधकारमिव क्षीणेंधन

रामशिरःकमलमधिकृत्य हारामहारमणहेजगदेकवीरतत्किंनस्मरसि अधरमधुमदीयंकाम
केलीषुपीत्वामृतमितियदवादीस्तीरवानीरकुंजे किममृतपरिपूर्णशीर्णमप्यंबरे केस्तमइवनहिश
त्रुंनाथमश्नासिघोरम् ३ रावणःशिरोविरहशोकमोहरोषप्रेमाकुलामालापैराश्वासयति जानकीम
त्वरंप्राणांस्त्यक्तुमिच्छतीभोप्राणाधिनाथराम अहहमधुरवाणीकिन्नवक्कारविंदेनयनकमल
योस्तेनोमदंगोविलासः अमरपुरवधूनांवल्लभोद्यासिनूनं व्रजतुपरमहंसोमेत्वदालिंगनेन ४
इतिरामशिरःकमलमालिंगितुमिच्छति आकाशे नखलुनखलुसौनिरामभूपालमौलिः समरशिरसि
वध्योनप्रियस्तेकदाचित् स्पृशकथमपिमातर्मानिशाचारिणस्त्वंहर हरहरभक्तस्येषमायावतारः ५

मत्संनमइत्यमरः वागर्थेप्ययमेवार्थः कोपातिशयान्मृतमारणोक्तिः मोहोत्रशोकादिः रतिस्तदाकुला वागर्थः शिरसिशोकमोहौविरहे
अद्यापिमांरामोनालिंगतीति रोषप्रेमाणौरावणपक्षेरामइतिशेषः ३ वागर्थेरामोपरिभ्रमयित्वेतित्वदालिंगनेनहेतुना प्रकरणंस्फुगमं
वागर्थेअत्फुरवंठतामाविःकरोति रावणेहतेघनन्निरूढेवांगनावल्लभःयातइति मेममभत्वदालिंगनेनत्वदालिंगनाभावेनजीवोव्र

जतु ५

वागर्थैशिरः कंरावणशिरोग्राहिणंकमात्मानंराममलमतिशयेनरामभक्षांत्याएनंरामरूपंरावणंमास्पृशेति ५ मायावं चनोपाय॰
मासाद्य अवगम्यमाभैषीर्भयंमाकार्षीः ६ कोलेति आशु राम कौशल्यव्यंजकंज्ञापयति आकर्णेति काहलोवाद्यभेदः मर्द्दलोमुर॰
जःस्तगमम् ७ विरमेति बलभिदुपलः इंद्रनीलमणिस्तद्वन्नीलः इंद्रनीलमणिवदुज्वलः हुंकृतस्तेभयमिति यद्वा हुंरावणंनिर्भ॰

इत्याकाशवाणीश्रवणमात्रेणशिरसीगगनमुत्पत्यनिष्क्रांतेरावणेनसह जानकीसहर्षसत्रपंच अयि
परमधर्मिणिरूपातरंगिणिसरमेकिमित्यद्भुतमिति सरमाराक्षसीसदयम् जानकित्वंनजानीषेरा
वणस्यातिदारुणां मायामासाद्यमाभैषीरामः कामंसजीवति ६ कोलाहलं काहलमर्द्दलानांहेषार
वंसज्जतुरंगमाणाम् आकर्णयाकर्णविशालनेत्रिरामागमादार्तनिशाचराणाम् ७ विरमविरम॰
शोकात्कोपमानोथरामः सतनयपशुबंधुं रावणंमर्दयित्वा बलभिदुपलनीलः कोमलः कोमलां
गित्वदधरमधुपानंहुंकरिष्यत्यजस्रम् ८ जानकी कामंजीवतिमेनाथोइतिसाविरहंजहौ
प्राङ्मत्वासत्यमस्यांतंजीवितास्मीतिलज्जिता ९ ततःपुनरप्यशोकवनिकांप्रविशति मारनाराचभि
न्नोरावणःस्मरसुंदरीभिःपरिवृतःसीतात्हृदयेविकारमुत्पादयितुंभोजानकिपश्य अस्मच्चंडचपेट॰
घातपतितस्वर्द्दंतिकुंभस्थलस्थूलोन्मुक्तसरक्तमौक्तिकलतास्तोमार्चितांघ्रिस्तनाः॥

स्यहुंभयेभर्त्सनेपि॰
चेतिशाश्वतः ८ काममिति प्राक्पूर्वंअस्यरामस्यअंतंमरणंसत्यंमत्वाजीवितास्मिपुनः मेनाथोजीवतीतिमत्वाशुचंविजहौ
त्यक्तवत्यस्मीतिलज्जितासापत्रपाभूदिति ९ अथान्यमायामनुवर्णयति अस्मदिति हेसीतेतवसतीत्वा स्थिरंपातिव्रत्यधर्मस्त॰

स्यवल्लीप्रसारः सएवयावल्लीतस्याः फलं सांप्रतं संगतं अद्यैवप्राप्तं धर्मः परत्रफलदस्त्वत्त्वत्रैवेतिभावः तदेवफलं द्योतयति य
तः एताः पुरंध्र्यः मदीयनार्यः त्वत्पदपद्मयोः षट्पदवधूप्रायाः भ्रमरीतुल्याः यथाभ्रमर्योरविंदमाश्रयंते तथैवैतास्त्वत्पा
दमितिभावः तासां वैशिष्ट्यं द्योतयति किंभूताः अस्मदीयोयश्चंडश्चपेटघातः करतलप्रहारस्ततः पतिताः विदलिताः येस्वर्दं
तिनस्तेषांकुंभस्थलेभ्यः सकाशात्स्थूलंबहुतरं यथास्यात्तथा उन्मुक्ताः निर्गताः याः सरक्तमौक्तिकास्तासांलतास्तोमैर्वल्लरी
समूहैरर्चिताअंघ्रयः स्तनाश्चयासांताः १० सीतेइति पुराशिरःकर्तनसमये अवज्ञायसे अवज्ञांकरोषि स्मित्वेत्यत्रकोपाति

एतास्त्वत्पदपद्मषट्पदवधूप्रायाःपुरंध्र्योध्रुवंसीतेसंप्रतिसंगतंतवसतीचारित्र्यवल्लीफलं १० सीतेपश्य-
शिरांसियानिशिरसाधत्तेमहेशःपुरातानित्वत्पदसंश्रितानिस्फुभगेकस्मादवज्ञायसे श्रुत्वेवपरदारलंपटवचः
स्मित्वाहतंरावणंनिर्माल्यानिशिरांसितानितवधिक्साध्वीवचःपातुवः ११ भवित्रीरंभोरुत्रिदशवदनग्ला
निरधुनासतेरामःस्थातानयुधिपुरतोलक्ष्मणसखः इयंयास्यत्युच्चैर्विपदमधुनावानरचमूर्लघिष्ठेदंषष्ठाक्ष
रपरविलोपात्पठपुनः १२ शयान्हास्यं शिवोनीर्णंतुनिर्माल्यं तत्स्पर्शार्हमुच्यतेइतिवचनात् साध्वीतितस्याः वचसा
न्यैपिजितकामाः भवंतितस्यांपुनः काशंकेतिभावः ११ भवित्रीति हेरंभोरु अचिराच्छीघ्रमेवत्रिदशानांवदनग्लानिर्मुखसंको-
चः भवित्रीभाविनी अस्तीतिशेषः कुतइत्यतआह यतोयुधिसप्रसिद्धस्तेत्वदीयोरामः ममपुरतोनस्थातानस्थास्यति उच्चैर्वि-
पदंआपदं जानकी० हेलघिष्ठहेलघुनर इदंपद्यं षष्ठाक्षरपरंसप्तमाक्षरंतद्विलोपात्विलुप्येतिल्यबुलोपेपंचमी पुनःपठए
वमुक्तेसप्तमाक्षरलोपादयमर्थः चरणत्रिकेतुक्रमेणभिन्नविलोपः दशवदनग्लानिः रामःस्थाताउच्चैःपदंयशोरूपम् १२

रेरेइति हे सीते सः अयं त्वत्सदनतः दशास्यः कस्मादवज्ञायसे इति भावः सकः यस्येति क्रुद्धं मूर्द्धानं ईशोपि जगतामीश्वरोपि रुद्रः उच्चैरनुनयति इति किं रेरे इत्यनादरे लंकेश त्रिपुरजयिनः सकाशात् मां छित्वा प्रसादं माप्रतीषीः मास्पृह मागृण्हीष्वेत्यर्थः हे अल्पबुद्धे विमते मारारेः खलु त्वं प्राणरंक न भवसि वरग्रभवः प्राणरंकाः त्वं तादृक् न अत्रैवार्थे वै प्राकृत इवाधुनिक इव यथेदानींतनः प्राणरंकस्तथा त्वं नेति भावः मामेवमाक्रुश्य रुद्रमाक्रोशति हेमारारे कामशत्रो वरं माविताराः एतस्य वरं मादेहि तथा पि दित्सं तमालक्ष्याह अनलभुवा त्वदात्मजेन गुहेन शापितोसि चेदस्मै वरं दास्यसि तर्हि गुहस्य शपथो ऽस्तीत्यर्थः वरार्थी भजन्

रावणः सर्वेदशध्यम् रेरे लंकेश लौल्यात्त्रिपुरविजयिनो माप्रतीषीः प्रसादं मां मां छित्वाल्पबुद्धे न खलु भवसि वै प्राकृतः प्राणरंकः मारारे माविताराः वरमनलभुवा शापितोसीति यस्य क्रुद्धं मूर्धानमीशोप्यनुनयति भृशं सोयमुच्चैर्दशास्यः १३ अर्धं चेतसि जानकीविरमयत्यर्धं च लंकेश्वरः किं चार्धं विरहानलः कवलयत्यर्धं च रोषानलः इत्थं द्विविधवैशसव्यतिकरे दाहे समेप्येतयोरेकं वेद्मि तुषारदग्धमपरं दग्धं करीषाग्निना १४

भक्तः भजनानुसारं दास्यन्नप्रभुरिति श्लोकाभिप्रायः १३ रामस्य दुग्धत्वदयत्वमुपपादयन्नात्मनो भजनीयत्वमाह चित्तस्य द्वौ भागौ तद्विभागं दर्शयन्ति रामस्येति शेषः रामस्य चेतसि विषये ऽर्धं चेतः यद्वा चेतसो ऽर्द्धं चेतसि तस्मिन् कर्मणि सप्तमी अर्द्धं चेतः जानकी विरमयति भस्मीकरोति तत्स्मरणाविर्भावात् चपुनः अर्धं चेतः लंकेश्वरो विरमयति तदुत्पन्नकोपातिशयात् किंच तर्के किं सीताक्रांतहृदयार्द्धं रामविरहानलः कवलयति भस्मीकरोति चपुनः अर्धं चेतसोर्धं मद्रावणाक्रांतं तद्रोषानलः कवलयति द्विविधो दुःप्रकारो वैशसो हिंसा तस्य व्यतिकरः शीतोष्णाव्यत्ययो यत्र एवंभूते एतयोः कामकोपानलयोः दाहे समेपि सति यद्वा एतयोश्चेतसो ऽर्धयोर्मध्ये

एकमर्धंतुषारदग्धंवेद्मि कामाग्नेः शीतदाहतोक्ता अपरमर्धंकरीषाग्निदग्धंवेद्मि शुष्कगोमयचूर्णंकरीषः एतेनकोपाग्नेरूष्णत्वं
अतोरामोदग्धत्वद्दयोजातः त्वंमांभजेत्याशयः १४ मुग्धेइति पुनरप्यनुनयति दैन्याविष्करणायपुनःपुनः संबुद्धिः हेमन्मथनदि
कामतरंगिणि प्रकरणंस्फुगमं वागर्थः प्रतिपाद्यते अत्ररामस्यविप्रलंभेप्रलापावस्था सोत्कारसौदर्धौ कांताश्रितकाल्पनिकव्य
वहारः स्यात्प्रलापोयमिति अत्रमुग्धेत्यादिपूर्वाकल्पना रामोवदति हेमुग्धेत्यादिसंबोधनसंभवति मैथिलि रामोहंएकेननिरु

मुग्धेमैथिलिचंद्रस्कंदरसुखिप्राणप्रयाणौषधिप्राणान्नक्षमृगाक्षिमन्मथनदिप्राणेश्वरित्राहिमाम् रा
मश्चुंबतितेमुखंत्वसकृत्सुखेनकेनच हंपुनश्चुंबिष्यामितवाननंबहुविधैर्मुचाग्रहंमानिनि १५ जानकी वि
रमविरमरक्षः किंवृथाजल्पितेनस्पृशतिनहिमदीयंकंठसीमानमन्यः रघुपतिभुजदंडादुत्पलश्यामकांते-
र्दशमुखभवदीयोनिष्कृपोवाकृपाणः १६ पश्य मत्ध्यानेनाभवद्रामः सीतारक्षस्त्वमस्त्यवे पश्यत्वत्कु
लनाशायमयारामेणभूयते १७ इतिरावणोनिष्क्रांतः निजमंदिरंकियंतंकियंतंसमयंनीत्वास्वगतमि-
दानींमहांतंप्रपंचंसुसाध्यनूनंजानकीमनुभविष्यामीत्यवधार्य भेरीनिःसाणशंखध्वनिगणतुरगस्यंदन-
स्फीतनादैःसानंदंराक्षसेंद्रः कटकभटभुजास्फालकोलाहलेन

पमेनसुखेनतेमुखंबहुविधैश्चुंबनभेदैश्चुंबिष्यामिहे
मानिनि आग्रहंमुंचेत्यर्थः वर्तमानसामीप्येवर्तमानवद्वा परस्परचुंबनाद्रतासंगः सूचितः १५ विरमेति हेरक्षः दशमुखभवदीयो
निष्कृपोनिर्दयः कृपाणः खड्गः वास्पृशतिवाहठात्स्पृशतिस्फुगमं १६ मत्ध्यानेनेतिक्रोधातिशयात्कोषमाविष्करोति हेरक्षः मयाज्ञा-
तं मत्ध्यानेनरामः सीताभूत् त्वद्धननचिराधिततत्वात् तस्यरामस्यध्यानेनाद्यमयारामेणभूयते रामोभवामीत्यर्थः १७ भेरीति राक्षसें-

हु॰ ना॰
६१

अं॰
१०

द्रः स्वयंरामोऽभवत् रामरूपोभवदिति माययाछिन्नान् कृत्तान् रावणस्यमूर्ध्नः शिरसिरुहभरेषु केशेषु एकतः पंचदधानः रामवेष
धारीरावणः माययारावणास्यमस्तकान् पंच पंचकराभ्यांदधानः काकाक्षिन्यायेनएकतइत्युभयत्रगृह्यते १८ तत्रागतः सका
मश्चेदतआह लंकेति यस्यरामस्यनाम्नः सकाशात्तद्ग्रहणादेवमनः नामगृहीतुरन्यांगनापहरणंनेच्छति किमुकर्तुंतस्यरा-
मस्यरूपात्परांगनाहरणंकुतःइच्छतीति १९ साक्षादिति साक्षान्निःसंशयंराममालोक्यझटितिशीघ्रम् हर्षादुत्थायकुचतटीम

लंकामापूर्यरामः स्वयमभवद्यथोमाययारावणस्यछिन्नान्मूर्ध्नोदधानः शिरसिरुहभरेष्वेकतःपंचपंच १८ ए
वंविधोभूत्वापुनरशोकवनिकांप्रविश्यरावणः लंकाभटोथरघुनंदनवेषधारी पापोजगाम पुरतोजनकात्मजा
याः नाम्नापियस्यकुतइच्छतितस्यरूपादन्यांगनापहरणेनमनःकदाचित् १९ जानकी रघुनंदनवेषधा
रिणंतमालोक्यसहर्षम् साक्षादालोक्यरामंझटितिकुचतटीभारनम्रापिहर्षादुत्थायोदस्तदोर्भ्यांदरदलित-
कुचाभोगचेलोन्नतांगी धन्याहंप्राणनाथत्यजरजनिचरच्छिन्नशीर्षाणिगाढंमामालिंगाद्यरवेदंजहिविरह
महापावकःशांतिमेतु २० इत्यालिंगितुमिच्छतिरामवेषधारीरावणः सविषादंभूत्वाततोप्यवसरेजनका
त्मजायांलंकापतिर्मकरकेतुशरातुरायाम्

रेणनम्रापि एतेनझटित्युत्थानायोगोदर्शितः उदस्तदोर्भ्यांरामालिंगना
योद्धतभुजाभ्यांदरमीषद्दलितंस्फोटितंयत्कुचाभोगचेलंकुचमंडलवस्त्रं तद्युक्तं उन्नतमंगंकुचरूपंयस्याःस्तगमं २० भूत्वेति ततो
नंतरं अवसरे आलिंगनसमयेस्मरार्तः रामरूपधारणात् पुराकामार्तोपिरावणः क्लीबोभूत्वा ततः पापात् सीतावं-
चनाश्रितमायातः अंतरधीयत अदृश्योऽभूत् द्राक्शीघ्रंजनकात्मजायां रामदर्शनात् कामशरातुरायांसत्यांशिवशिवकष्टंक

६१

ष्टस् २१ हेति यत्रकालेमंदोदरीराक्षसेंद्रंत्तुंबिष्यति तत्र तस्मिन्नवसरे त्वमपिवेत्स्यसि उक्तंचपंच तत्वानिधर्मश्वर विचंद्रोच पाश
भृत् रात्रिर्दिवानरस्यैतेवृत्तज्ञाः समुदीरिताइतिमनुः अतः आकाशादीनांरावणवृत्तज्ञानसामर्थ्यात्प्रार्थनं २२ अथेति रामत्वेरा-
मभावेविषये वर्तमानेमयि स्थितेसति कीदृशेमयि कृतकृत्येकृतंकृत्यंयेनयद्रामकृत्यंरावणशिरःकर्तनादिकं तदपिकृतमिति-
भावः तदपिएताःप्रवृत्तयः क्लीबत्वादयः निरुंध्यंति कीदृश्यः पापंमूलंयासांताः पूर्वपापान्मात्रेप्सितस्करवमितिमतम् २३

क्लीबोविशीर्णमणिदंडसुतःस्मरार्तः पापात्ततः शिवशिवांतरधीयतद्राक् २१ जानकीसरमोपदेशाद्रावणंर
घुनंदनवेषधारिणंमत्वासविषादं हाकाशहाधरणिहावरुणार्कवायोवेत्स्यामिधर्मकथमागतमात्मनाथम्
आकाशे मंदोदरीरघुशराहतराक्षसेंद्रंत्तुंबिष्यतित्वमपिवेत्स्यसितत्ररामम् २२ अथनिजकेलिमंदिरस्थो
रावणः स्वगतम् कृतकृत्येपिरामत्वेवर्तमानेमयिस्थिते निरुंधंत्येवताःसर्वाःपापमूलाःप्रवृत्तयः २३ ज
नस्थानेभ्रांतंकनकमृगतृष्णाहतधियावचोवैदेहीतिप्रतिपदमुदश्रुप्रलपितम् जनस्थानेइति विषयःसीताभि
लाषः सएवमृगतृष्णातया आसमंततोहताधीर्यस्य तेनमयारावणेनजनस्थानेदंडकारण्यदेशेभ्रांतं अत्राप्युदश्रुयथास्यात्तथा
प्रतिपदंहे वैदेहीतिवचः प्रलपितं अथचलंकाभर्तुर्मेममवदनानांयापरिपाटीतस्यावियोजनंकर्तनमितियावत् कृतावदनपरि
पाटीषुघटनेतिपाठे रावणमुखपंक्तिषु इषुघटनाबाणयोगः प्रहारः कृतेति मयापिरामत्वंमायारामरूपत्वं आप्तंप्राप्तं तथापिकुशल
वकृतासीतानाधिगतानप्राप्ता दर्भसीरनृपाः कुशाइतिहैमी कुशेनसीरेणलक्ष्यतेलक्ष्यतइतिकुशलवः सीरध्वजोजनकइत्यर्थः
इदमेवपद्यंहतरावणस्यप्राप्तराज्यस्यपरित्यक्तसीतस्यरामस्यवाक्येनव्याकुर्वंति तद्यथा विषया एवमृगतृष्णाचतुर्दशसमावने-

स्थित्वा राज्यं प्राप्स्यामीति मृगतृष्णाविषयः सीताभिलाषस्तदन्वेषणरूपः रमयति सर्वानिति रामो राज्यं तद्भावो राज्यत्वमपि प्राप्तं
अन्यत्पूर्ववत् अथास्य तृतीयोप्यर्थोस्ति कस्यचिद्भिक्षुकस्य वाक्येन विषयाः स्रक्चंदनस्त्रीपुत्रलालनरूपास्त एव मृगतृष्णावदवि
द्यमानास्तैरेव हृता धीर्यस्य तेन मया भिक्षुणा जनस्थाने जनानां लोकानां स्थाने स्थाने गृहे गृहे भ्रांतं एकवचनमुपलक्षणं जात्यैकवचनमथवा
वै निश्चयेन प्रतिपदम् देहीउदस्रु यथास्यात्तथा प्रलपितम् पदं स्थाने रसस्थितावितिचरकः यस्य रसस्य यः आश्रयस्तदग्रे तद्रसा

कृतं लंकाभर्तुर्वदनपरिपाटीविघटनं मयाप्तं समत्वं कुशलवसुतानत्वधिगता २४ इतिश्रीमन्महानाट
के हनूमद्विरचिते रावणप्रपंचो नाम दशमोऽंकः १० ७ ७ अथ तत्र स्फुवेल्लाद्रिकटके लंकापतेः स
काशादधिगतं दूतमंगदं जानकीवल्लभः पप्रच्छ अये दूतांगद लंकेश्वरे संधिर्न जनिता प्रीतिरुपकारिणी स्या
दनुपकारिणी वा अंगदः राजन्सर्वथेयमनुपकारिणी पुलस्त्यापत्येषु प्रीतिरिति भगवानिहोदाहरणं हरिणां
कधीश्वरस्तद्गुरुत्वात् उक्षा रथो भूषणमस्थिमाला भस्मांगरागो गजचर्मवासः एकालयस्थेपि धनाधिना
थे सखित्वं दशेयं त्रिपुरांतकस्य १

भिनयेन उदस्रुत्वमुक्तम् अलमत्यर्थम् का भर्तुः कुत्सितप्रभोः संबंधे वदनस्य परिपाटी रसाभिनयवाक्चातुर्यादिरूपा तस्या
विशेषे घटना चेष्टा कृता एवं रामत्वं तत्तद्रंजनत्वमाप्तं कुशलवसुता उत्तमवस्तुत्वं रत्नहेमादिसमूहरूपा नाधिगता न प्राप्तेति २४
इतिश्रीमद्धनूमन्महानाटके दीपिकायां मोहनदासविरचितायां रावणप्रपंचो नाम दशमोऽंकः १० ७ ७ अथेति उक्षे
ति उक्षा वृषः धनाधिनाथे कुबेरे त्रिपुरांतकस्य रुद्रस्य दशा विपरीता तथा रुद्रानुचरस्यापि रावणस्य विपरीतैव मतिरिति भावः १

नगिरिर्नीलः रावणधनुरग्रेस्थितइतितात्पर्यार्थः तदादिङ्मंडलजुषांस्वस्वदिगाकाशस्थितानांदेवानांमतिरेवंजनिता एवंकिम्
रावणहस्तधनुःशिखरेभृंगस्थानीयोनीलः श्यामत्वात् नीलहस्तेगिरिस्त नगिरौजलस्थानीयात्तृष्णागिरिप्रस्रवणा अयमेवो-
न्मादः १४ आश्चर्यमिति रजनीचरपतेः रावणस्यवक्त्रचक्रंमुखसमूहः भिन्नभावंचित्ररसाश्रयंबभूव भिन्नत्वमेवविवृणोति
रामेसाश्चर्यंसविस्मयंसाद्भुतरसमितिसपटुसोत्साहम् सवीररसमिति उत्साहात्माभवेद्वीरः सव्यथंसविषादंसशांतरस
मितिविषादः संचारिकोवा मयासीताआनीतायतोदेवाअपिवल्गंते अद्यापिसंधिंकरोमीति विषादः तदुक्तंरसोदधौ विप
दिष्टाद्यनवाप्तेः प्रारब्धासिद्धितोपराधाच्च अनुतापोत्रविषादोविज्ञेयोमुक्तिसंबंधः साशंकंसविप्रलंभंशृंगारंशंकास्यसंचा

रावणस्य साश्चर्यंतत्ररामेसपटुभटमुखेसव्यथंदेवतौघेसाशंकंरामयुद्धेकपिषुसविनयंलक्ष्मणेसा-
श्रुपूरं सास्रूयंभ्रातृकृत्येसभयमनिलजेसत्रपंचात्मकृत्येक्षिप्रंतद्वक्त्रचक्रंरजनिचरपतेर्भिन्नभावं
बभूव १५

री रामः सीतांमागृण्हात्विति शंका उक्तंचरसोदधौ स्वीयापराधचौर्यंकृतपरचौर्यादितोमताशंका स्वामि
ष्टेक्षणयोगस्तदभयभावोत्रविश्लेषः अत्र स्वामिनिष्टेक्षणंसविनयंसदैन्यंसकरुणमिति दैन्यंसंचारी हनूमदादिदर्शनोद्दीपिता
क्षपुत्रवधाद्दैन्यम् साश्रुपूरंरसाद्रौद्ररसात्क्रोधस्थायीक्रोधानुभवमश्रुतत्रैवलक्ष्मणदर्शनेसतिमेघनादेवत्सलरसोजातः एतेन-
पुत्रोहतइतिउद्दीपनंवात्सल्यात् अश्रूणिअत्ररसहृदयंवक्त्रहृदयज्ञेय सास्रूयं सहास्यरसंहास्येसूयासंचारीसाचविभीषणगताअ
सूयातोपिहिहास्यंभवतीतिप्रसिद्धंसभयंभयानकरसः भयंस्थायी सत्रपंसबीभत्संत्रपात्रानुभावः साचयाजुगुप्सातोभवति
जुगुप्सात्रस्थायी एव मद्भुतवीरशांतशृंगारकरुणरौद्रवत्सलहास्यभयानकबीभत्साः यथाक्रमंज्ञेयाः १५ ७ ७

बध्वेति इंद्राश्वकेशश्रेण्यां उच्चैर्गाढं दश तूणानान्निषंगान् बध्वा वामैर्दशभिर्दोर्भिर्दश चापान् विधुन्वन्सन् दक्षिणैर्दश
भिर्दोर्भि र्दशशरानाददानः दशमुखेषु पृथग्भावं द्योतयति अत्र रसाः ग्रंथगौरवात् नोद्घाट्यंते कीदृक् राक्षसेंद्रः क्ष्वेड
न्हसन् क्ष्वेडामर्षगतं हास्यमिति धरणिः इंद्रः तच्च मुखं तेषां श्रीर्यस्य तत्त्वाधिकं दशधोक्तम् १६ रणेति कुचस्थानीयाः कुं-

बध्यात्तूणान्दशोच्चैर्मघवहयसटावेणिबंधेन वामैर्दोर्भिश्चापान्विधुन्वन्दशदश च शरान्दक्षिणैराद
दानः क्ष्वेडन्क्रीडन्प्रकुप्यन्प्रसरदभिभवद्धूर्जितातर्जितौघैः शश्वत्स्विद्यन्मुखश्रीरवतरति रणप्रां
गणं राक्षसेंद्रः १६ रामरावणयोः रणांगणे कुंडलिनो मुवानः परस्परसायकाभिन्नदेहाः कुंचाग्रल
ग्नाइव कामिनीनां कुंभाग्रलग्नाः स्फुषु पुर्गजानाम् १७ गगनं गगनाकारं सागरः सागरोपम रा
मरावणयोर्युद्धं रामरावणयोरिव १८ तत्र मारो नाम राक्षसस्तत्र मुल युद्धे अश्वारूढस्तत्क्षयावद्भज
तिन शिबिरे वाजिनः पूर्वमर्धे धावंतं खंडितस्य स्वमरिकुलबलात्पादयुग्मेन धीरः मारः क्रव्यादवीरः
शिरसि करतलोत्थापितेनांगदेन क्रुद्धेनानाडितोद्राक् शिवशिव समरे पश्चिमार्धेन तावत् १९

भाः १७ १८

अश्वेति यावत् क्रव्यादवीरः मारः खंडितस्य मध्यतः कृत्तस्य वाजिनोश्वस्य पूर्वार्धमध्यारूढः अरिकुलबलात् शत्रुसैन्यात्
सकाशात् शिबिरं स्वकटकं पादयुग्मेन खंडिताश्वार्धप्रदेशे कृत स्वचरणयुगुलेन न व्रजति नगच्छति धावंतं अर्धं तावत् क्रुद्धे
नांगदेन द्राक् शीघ्रं समरे पश्चिमार्धेन कृत्वा पश्चिमभागेन कृत्वा शिरसि आताडितः किंभूतेन पश्चिमार्धेनांगदकरतलोत्था
पितेन शिवशिव कष्टं ५०

महच्छरीराणि रक्षांस्यल्पशरीरान्वानरानवलोक्यजयेविचिकित्समानंरामंबोधयति यावानिति हेराम अब्धिर्यावन्मान
तो ऽगाधतायाश्चतावतानल्सदृशमानेन कलशशिशुनाकिंपीतः किंतुमहानब्धिरल्पतरो ऽगस्त्यइति चपुनः हरिरिंद्रःतु
ल्याकारान् स्व प्रमाणान्खगान्गिरीन्प्रहरति अपितु स्वयमल्पः अद्र्यस्तुगाः पक्षिपर्वतयोःखग इतिहेमी तेषांसपक्षत्वात्
किं भूतान् खगान् अद्रितुंगानुसूर्य पर्यतोन्ननान् अद्र्योद्रुमशैलार्काइत्यमरः तत्रतस्मिन्प्रस्तावे अगम्यागंतुमशक्याः स
सुद्रादयः प्रथितवपुषः गिर्यादिय तिग्मस्वभावास्तेजस्विनः अगस्त्येंद्रादयोपिसंतुभवंतु तेषांसर्वेषांग्रासग्रहणेकवलग्रहणा-

अंगदः यावानब्धिः कलशशिशुनातावनाकिंनुपीत स्तुल्याकारान्प्रहरति हरिः किंखगानद्रितुं
गान् तत्रागम्याः प्रथितवपुषः संतुतिग्मस्वभावास्तेषांग्रासग्रहणरभसंरामतेनामधेयम् २० रा
वणः स्त्रीमात्रंननुताटकाप्तुनिस्कृतारामः सविप्रः शूर्पणिर्मारीचोमृगएवभीतिभवनंवालीपुनर्वानरः
भोकाकुत्स्थविकत्थसेवदरणवीरस्त्वयाकोजितोदोर्गर्वस्तुतथापितेयदिपुनः कोदंडमारोपय २१

दौसरभसंसत्वरंरामतेनामधेयम स्तीतिशेषः रामोयमिति शब्देनैवतेनष्टाः भविष्यंतिकिमत्राल्पदीर्घविचारणयेतिभा
वः कतिचित्पुस्तकेषुरावणवाक्यमिदं तत्सश्याप्तुनीतिपाठः तत्रायमर्थः यावानब्धिस्तावानगस्त्येनपीतः तावतासर्वपानेन-
किंकानोहानिः जाताभवतातुबद्धएव इंद्रोपिगिरीन्प्रहरति तेनगिरिप्रहरणेनकिंकानोक्षतिर्मत्पुत्रेणबद्धएवतथात्वयापिगि-
रिसमाः शौर्यादिहीनाः केचनराक्षसाः हताः तत्तस्मात्प्रथितंवपुर्येषांतेतिग्मस्वभावाः स्वभावतीक्ष्णाः मादृशाः राक्षसाः संतु
तिष्ठंतु परंतुअमूनल्पतरान्राक्षसानेव हेरामते षांतिग्मस्वभावानां तेनामधेयंतन्नाम्नाख्यातंसैन्यंच ग्रासग्रहणायरभसंभ्र
न्यंनकिमपीत्यर्थः रभसः पदभ्रून्ययोरितिचरकः २० स्त्रीमात्रमिति विकत्थसे विकत्थनं करोषि अतोवदत्वयावी

रःकोजितः अन्यत्सुबोधम् २१ वंद्याइति हुमितिकोपे हेरावण एतेरामादयोवंद्याः नमस्कारतियोग्याएव कीदृशाः वर्ततांव्यवह
नृणांमध्येविचारणीयचरितान अतएवलोकेमहांतस्तेप्रसिद्धाः अविचारणीयत्वमेवाह स्कंदस्त्रीताटकातद्दमनेपि अरवंडंय
शोयेषांते स्त्रीवधादपकीर्तिबाहुल्यानियमात् अतस्तेतिष्ठंतुतद्वार्तयाकिंकृत्यंचेद्वीर्यमेवश्रोतुकामोसितर्हिश्रृणुयानिप्रसि
द्धानित्रीणिसुरवानित्रिशिरःशिरांसि अर्थात्खरदूषण शिरांसिचकुतः सकाशात्परांणिदेहाद्भिन्नानि आसन् तत्त्वमेववद

अत्रांतरेंगदः वंद्यास्तेनविचारणीयचरितास्तिष्ठंतुहुंवर्ततांस्कंदस्त्रीदमनेप्यकुंठयशसोलोके महांतो-
हिते यानित्रीणिकुतोसुखान्यपिपराण्यासन्खरायोधनेयद्वाकोशलमिदंस्कृतुनि धनेतत्राप्यभिज्ञोजनः
२२ रावणः शंभोः पर्वतकंदुकेनमहतीक्रीडाकृतायेनतंरेरेमानवराममास्मरभवंदेवेश्वरंरावणम् ज्या
घोषंकुरुताटकांतमस्करणामंतकंसंस्तुगेयश्चानीतिसमयूर्धीरकुटिलःशाखामृगाणांपतिः २३ रामस्त
थापितंरावणंजघान लज्जावनम्रवदनांबुजःसन्मनाक्स्थितः रावणःविहस्यरेरेमानवराम यासु-
यानिहतोघोरेसमरेतवपूर्वजः अनरण्यःकिमद्यत्वांव्यथयत्यथलज्जितः २४ रामोनिःशंकंरेरेरा
क्षसाधमपश्य नदूयेनःपूर्वंनृपतिमनरण्यंयदवधीजयोवामृत्युर्वायुधिक्षत्रजभृतांकःपरिभवः

वालिहननंपियत्कौशल्यंप्रावण्यंतत्रापिजनः अर्थात्त्वमेवाभिज्ञोसि वालिनात्वंबद्धःसतुरामेणहतइतिभावः २२शंभोरिति
भवंदेवेन्नस्मरसि आकृतोभवमन्यथामितिविश्वः तर्हिज्याघोषंकुरु अनीतौसमयांधियमीरयति येतेष्वपि कुटिलः अल्पनीति
वानितिशाखामृगाणांपतिर्योवालीतस्याप्यंतकंज्याघोषंकुर्वित्यर्थो व्यंग्यः २३ यइति सुबोध २४ नदूयेइति कृपणंसदैन्यंयथा-

स्यात्तथा हैहयपतेः सकाशात् यत्पुलस्त्यस्त्वसितामहः यद्भिक्षामकृततद्भिक्षाहरणंव्यथयतीत्यर्थः २५ यइति वक्षोनिषे-
धादन्यांगहननमायातं मासीतासप्तद्वीपैः सप्तभिः पृथिव्याद्यावरणैः समंद्वीपोस्त्रियामावरणेपुंस्येवांतर्जलावनावितिर्वै-
जयंती कीदृशी भुवनावली विलसिता विलीयतेसर्वमस्मिन्निति विलं प्रकृतिस्तयासिता आवृतासप्रकृत्यावरणेत्यर्थः
विङ्‌विलयनेइत्यस्यविलमितिरूपं अन्यथाद्वीपानांत्रिभुवनांतःपातित्वादानर्थक्यप्रसंगः स्यात् एतद्धनने ।कस्मान्महा

जितंमन्येकारागृहविनिहितंहैहयपतेःपुलस्त्योयद्भिक्षामकृतकृपणंतद्व्यथयति २५ योसमोनजघा
नवक्षसिरणेतंरावणंसायकैः सः श्रेयोविदधातुवस्त्रिभुवनव्यापारचिंतापरः त्वद्धस्यप्रतिवासरंवस
तिसातस्यास्त्वहंराघवामय्यास्तेभुवनावलीविलसिताद्वीपैःसमंसप्तभिः २६ सप्रौढरावणरुषा-
विहितावलेपः सज्जोबभूवदृढसंगरबद्धदीक्षः आपन्नभीतिहरणव्यवसायिनांहिप्राणास्तृणंधिपुलस
त्वसहायभाजाम् २७ तत्ररामोरतिंलेभेनप्रियाविरहार्दितः तत्सत्यंमनसिस्वच्छेरम्याणांरमणीय
ता २८ रामः बाणोयंममताटकात्माशिरसिस्नातःस्वसुर्नासिकाप्राणायामपरःखरत्रिशिरसांहुत्वा
दशास्याहुतिं मारीचंचबलिंविधायतदनुत्वाचम्यवारांनिधिंभोक्तुरावणमामिषंमृगयतेभादीयतांमैथिली २९

मलयःस्यादितिभावः अनेनविप्रलंभोन्मादावस्थान्वदर्शितेतिभावः २६ सइति सरामःअवलेपोगर्वः सत्वमुत्साहःसएवसहा
यःतंभजंतीति २७ तत्रेति सुबोधं २८ बाणइति आत्मा रुधिरंतद्युक्तेशिरसि देहेधातुषुकूटस्थेजीवेप्यात्मामतःपुमानिति
विश्वः धातुनारुधिरंगृह्यते स्वसुःखड्गिन्याः शूर्पणखायाः साहचर्याद्दूषणोपिरावणस्येदंरावणंरावणस्यामिषमित्यर्थः
८ २९

क्लीबेति हेरामरणेषु प्राणत्राणाययाधीः सालज्जा प्रशांत्यैसंधये साक्लीबानामेव यथाविदूत्क लज्जा प्रशांत्यै मौढ्याच्छाद
नाय मूर्खाणांमौनस्वीकारः तथाकातर्याच्छादनायसंधिरिति ३० रेइति अनवसरप्राप्तैश्वर्य एतस्याशेषहननमैश्वर्यंहेविरि
ञ्च्यजगत्सर्गायपुनःसृष्टयेबीजंसंनिद्युगोपाय निःशेषंनरवानरान्हनिष्यामीतिभावः ३१ अद्येति प्रकरणंसुबोधम् वाग

रावणस्तथापिसावज्ञम् क्लीबानामेवयुद्धेषु प्राणत्राणायरामधीः लज्जाप्रशांत्यैसंसत्सुमूर्खाणा
मिवमूकता ३० गगनमंडलमवलोक्य रेकालत्वमकाललब्धविभवः स्वैरस्य कामोभवशंभोर्भूषयन्
ननैः शिवशिरोमाल्यैर्निजांगमुड्डुः किंचत्वंचविरिंच्य संनिद्युजगत्सर्गायबीजंक्वचित्सन्नद्धः करवाल
भीषणभुजोयुद्धायलंकेश्वरः ३१ राममाक्षिपति अद्यवाजानकीरामकामंपास्यतिमंदिरे
रणेवादारुणेगृध्रोमधुरानधरान्मम ३२ तत्राशोकवनिकास्थितविमानमारुह्यजानकींरामरावणयोर्यु
द्धंदर्शयतित्रिजटासरमाच मंदोदर्यपिसुंदरीपरिवृतालंकाचलमारुह्यपश्यति रुद्रोपिसमुद्रमध्येएकं
नचरणेनोपस्थितोयुद्धंपश्यति देवाः सर्वेविमानाधिरूढाः नभोमंडलगतायुद्धंपश्यंतिस्म रामः संहारभै
रवइवक्रोधन्नाटयतिकालरुद्रइव रेरेनिशाचरपतेत्वरितंगृहाणबाणासनंत्रिदशदर्पहरंशरंच नि
र्वापयामिविरहाग्निमसुप्रियायांमंदोदरीतरलनेत्रजलप्रवाहैः ३३

र्थः प्रतिपाद्यते वानिश्चये हेजानकि रामोय
दिजीवति अद्यदारुणेरणेममाधरान्कामंयथेच्छंगृध्रः पास्यतीति द्वितीयोमुहुरर्थे कीदृशेरणे मंदिरेवीरशरणे ३२ रेरेइति बा
णासनंचापम् ३३

मंदोदरीति हाकष्टमागतं अनेनरामेणदशाननोपि स्फुटंअसंशयम् ईषज्जयः ईषत्करोजयोयस्य ईषज्जयत्वंद्योतयति य
दायंबालतरोऽतिशयबालकः बाणैस्त्राटकामंतर्लदयेयस्तेजोभवोग्निस्तस्यसमिंधनेसम्यगिंधनादानेसामिधेनीमेध-
स्तामाहारकोमंत्रः सामिधेनीतांअकृतस्वतेजोग्निदीपनकर्त्रीम् एधोमंत्रःसामिधेनीतिशाश्वतः कोणपाराक्षसास्तेषां
कोटिमुत्पाटयन्सन्किमप्यनिर्वचनीयबलंरक्षःकोटिं अद्यायंतरुणइतिभावः ३४ आकृष्टेइति युधिधनुष्याकृष्टेसतिर

इतिबाणान्स्पृशति मंदोदरीसभयम् उत्पाटयन्किमपिकोणपकोटिमंतस्तेजोहुताशनसमिंधनसा
मिधेनीम् हस्ताटकीमकृतबालतरः पृषत्केरीषज्जयस्फुटमनेनदशाननोपि ३४ रामभुजदंडः आ-
कृष्टेयुधिकार्मुकेरघुपतेर्वामोऽब्रवीद्दक्षिणंदानादानस्कभोजनेषुपुरतोयुक्तंकिमित्थंतव वामान्यः पु-
नरब्रवीन्ममनभीःप्रष्टुंजगत्स्वामिनंक्षेप्तुंरावणवक्त्रपंक्तिमितियोदद्यात्सवोमंगलम् ३५ रामः कुशि-
ककृतसपर्याहृष्टदिव्यास्त्रमंत्रोभृगुपतिसहयोद्धावीरभागीनबाहुः दिनकरकुलकेतुःकौतुकोत्ता
नचक्षुर्बहुमतरिपुकर्माकौतुकीरामदेवः ३६ रघुपतेः रामस्यवामः आयुधिहस्तः दक्षिणंआयुधिहस्तंअब्र
वीदित्यन्वयः पाणावायुधिनद्वयोरितिशब्दशेषे आयुधानिधार्यंतेरेखाहारेणास्मिन्नित्यायुधि बन्धश्रृंखलरूपंपधजातिः
स्वरयोगवियोगाभ्यामर्यदाबन्धश्रृंखलेतिचित्रालंकृतौ दानादानस्कभोजनेषुत्वंपुरतःपुरोवर्तीअधुनाइत्थंप्रष्टुतोगमनं
किंयुक्तं वामान्योदक्षिणोहस्तःपुनर्वाममब्रवीत् हेवामरणेममभीर्भयंन रावणवक्त्रपंक्तिंभेत्तुंप्रष्टुमागतोस्मीतिशेषः इ-
तिवदन्सःदक्षिणःवोमंगलंदद्यात् ३५ कुशिकेति नदारामदेवःकौतुकीयुद्धोत्सवीजातइतिशेषः वीराणांभोगाययोग्यौ

बाहूयस्यसः यद्वावीरोरमणीयो भोगीनोवास्फकि स्तद्द्वाहूयस्य बहुमतं रिपुभिः कर्मशौर्यंयस्यसः ३६ रावणः दश
भिर्हस्तयुग्मैर्यत्कार्यंकरोति तदेवकार्यंश्रीरामः एकेनैवहस्तयुग्मेन करोति अतएव नरवीरस्यश्रीरामस्य शिल्पचा
तुर्यंरक्षः पतेः रावणाद्दशगुणमधिकमिति ३७ रेरावणेति अद्येनंहनिष्यामीतिप्रतिज्ञा अंकै अस्तनगावलंबि निमं-
दोदरी अस्तशैलस्थर्केचकोरकवधूरिवासीत् यथाचकोरीरात्रिमेवेच्छतिचंद्रकरामृतानुभवात् तथाचमंदोदरीरात्रौ
राक्षसानांबलातिशयात जानकी चक्रवाकीवासीत् यथाचक्रवाकीदिवैवेच्छतिरात्रौवियोगागमात् तथासीतारात्रौरक्षोति

यद्रावणोबहुभिरेवभुजैः करोति तद्राघवः प्रतिकरोति भुजद्वयेन कर्मद्वयंयदपितुल्यफलंतथापिरक्षः
पतेर्दशगुणंनरवीरतुल्यम् ३७ तत्रमंदोदरीजानकीच रेरावणास्तमुपयातुसहत्वयार्कः श्रीराघवे
समरमूर्ध्निकृतप्रतिज्ञे मंदोदरीजनकजास्तनगावलंबिन्यर्केचकोरकवधूरिवचक्रवाकी ३८ रामः ए
कस्मिन्विनिपातितेपिशिरसिक्रोधोपशांतिः कुतः किंतुस्वानुनयायमूर्धनिधनंदृष्ट्वानयत्रारिणा त्व-
त्तोमूर्धबहुत्वतः फलमिदंसम्यङ्मयालभ्यते छिन्नंछिन्नमवेक्ष्यराक्षसपते त्वंदुर्नयंज्ञास्यसि ३९

शयात् रामप्रतिज्ञाभंगभयादितिभावः ३८ एकस्मिन्निति स्वस्यच्छेत्तुः अनुनयायमाछिंधीत्यादि स्तवायत्रशिरःकर्तने एकस्मि-
न्नेवशिरसिकृत्ते अन्यशिरोभावात् अनुभवाभावः अयमर्थः यस्यपुंसोएकएवमूर्धातिष्ठति तस्मिन्मूर्धनिछिन्नेसति सम्‌तकः पु
रुषः ममसूर्धानंमाछिंधीत्यनुनयंप्रहारकर्तुः पुरुषस्यकथंकरोति अनुनयाभावात्प्रहारकर्तुः क्रोधशांतिः कुतः क्रोधोनगच्छ
तीर्थः अतः मूर्धबहुत्वतः त्वत्तः सकाशात् इदंफलंसम्यङ्मयारामेणलभ्यते प्राप्यते यतः हेरावण छिन्नंछिन्नं मूर्धानं अवेक्ष्यदृष्ट्वा

स्वकीयं दुर्नयं अनीतिफलं पश्यसीति यतस्तव बहवः मूर्धानस्तिष्ठंति अतः मयाच्छिन्नं स्वमूर्धानमवेक्ष्यानीतिफलं पश्य सिममक्रो
धोपशांतिर्भविष्यतीत्यर्थः ३९ धनुरिति एकैरेकैः करैः भृशं मूर्ध्नः अन्यैरन्यैः करैर्भृशं नभसि विक्षिपन्सन् युगपदेव विंशतिं
चपलयति ४० कल्पांत इति रामः रणेन वभिर्बाणैर्नव एव रावणस्य मस्तकान् चकर्त बाणसाफल्ये विशेषणद्वयं भूयः कर्त
नानंतरं स राम: पुनः अभिनवान् नवीभूतानालोक्य विस्मितः सन्मुहूर्तं विश्राम्यागस्त्यदत्तं ब्रह्मास्त्रं आददे गृहीतवान् अत्रे

रावणः अत्यंताद्भुतनरश्रीरामबाणादिताडनव्यग्रः धनुर्निस्त्रिंशादिप्रहरणगलच्छेदकुपितो दशास्यः
स्वान्मूर्ध्नो रघुपतिशरव्रातदलितान् करैरेकैरेकैर्नभसि प्रधमादाय युगपत्क्षिपन्नन्यैरन्यैश्चपलयति दो
र्विंशतिमपि ४० रामः सावष्टंभम् कल्पांते यत्कृतांतोरिववर समरप्रांगणे रामचंद्रो बाणैरुत्तीर्णशाणैर्न
वभिरपि दशग्रीवमूर्ध्नो नवैव निच्छेदालोक्य भूयः स पुनरपि नवान्विस्मितः सन्मुहूर्तं विश्राम्यागस्त्यदत्तं
तदनु रिपुवधायाददे ब्राह्ममस्त्रम् ४१ पैतामहं रघुपतिः समरेति कोपाद्बाणं मुमोच तद्धृदयं दशकंधरस्य
भित्वा स तत्स्थदयशोणितशोणगात्रः प्राणान्विवेश धरणीतलमस्य नीत्वा ४२ मंदोदरी सकलसुंदरीभिः
परिवृता गलदविरलनेत्रजलप्रवाहैः सीतापतेर्विरहानलेन सह लंकापतेः प्रतापानलं निर्वापयंती हाहाका
रं घोरफूत्कारैः कुर्वंती झटिति त्रिकूटाचलादुत्त्यसमरभूसीम हानिद्रागतस्य निजप्राणनाथस्य लंकापते
श्चरणकमलयोर्निपत्य, यं कथा ब्रह्मणास्य वरो दत्तो यावद्दशमो मध्यस्थो मूर्धा न विच्छिन्नस्तावदन्यानि शिरांसि कृत्तान्य
पि अकृत्तानि भविष्यंतीति ४१ पैतामहमिति पैतामहं ब्रह्मास्त्रं सः बाणः तद्धृदयं भित्वा अस्य रावणस्य प्राणान्नीत्वा भुविर्विवेशे-
त्यन्वयः ४२

स्रगसंगद्यं, भिन्नेति अथविप्रलंभगुणकीर्तनमाविः करोति हेप्रियतुभ्यंनमः किंभूताय भिन्नानियानीं द्विगज बंधूनां सिं
धुराणांगजानांशिरांसि तेभ्यः संपतितुंशीलंयेषांतैः मौक्तिकैः कृत्वाशश्वत्तयाविजयप्रशस्तिरचना लेखनं तद्युक्ताया व-
र्णावलीतस्याः शिल्पिनेलेखकाय गजकुंभच्युतमुक्ताहारैरेवात्मजयप्रशस्तिं लिखतीत्यर्थः नाकांतःपुरिकानांस्वर्गांतः
पुरस्थमृगदृशांकपोलेषु विलसन्कुंकुमपत्रस्यांकुरः चित्रंतत्रयः श्रीविन्यासः शोभातिशयः तस्यविनाशायभीषणःभुज

भिन्नैरावणबंधुसिंधुरशिरःसंपातिभिर्मौक्तिकैःशश्वद्दिग्वजयप्रशस्तिरचनावर्णावलीशिल्पिने ना
कांतःपुरिकाकपोलविलसत्काश्मीरपत्रांकुरश्रीविन्यासविनाशभीषणभुजस्तंभायतुभ्यंनमः ४३ हा
प्राणेशलंकेश भूयिष्ठानिसुखानिचुंबतिभुजैर्भूयोभिरालिंग्यतेचारित्रव्रतदेवतापिभवताकांतेनमं
दोदरी हालंबोदरकुंभमौक्तिकमणिस्तोमैर्ममैकावली शिल्पेवाधमर्णीकृतस्यभवतो लंकेंद्रनिद्रार-
सः ४५ एकेनैवसमुद्धृतोहरगिरिर्द्वाभ्यांत्रिलोकीजितायस्याष्टादशभिर्भुजैरवसरःशस्त्रस्यनासादि
तः,

स्तंभोयस्य ४३ भूयिष्ठानीति मंदोदरी तेभूयिष्ठानि बहूनिसुखानिचुंबतिकांतेनभवतास्यभू
योभिर्बहुभिर्भुजैरालिंग्यतइत्यन्वयः पतिव्रतादेवी हेलंकेंद्र भवतोपिनिद्रारसोजातः हाकष्टंऋणिनोनिद्रारसाभावात् ऋण-
मेवद्योतयति लंबोदरःगजाननोगणेशस्तत्कुंभयोः येमौक्तिकसमूहास्तैर्ममयः एकावलीहारभेदः एकावल्येकयष्टिकेत्यमरः
तस्याःशिल्पेऽभिनिर्माणेवाचा अधमर्णीकृतस्यास्यलंबोदरं विभिद्यतवहारं करिष्यामीतिवा उत्तमर्णाधमर्णौद्वौप्रयोक्तृग्राह
कौक्रमादित्यमरः ४४ एकेनेति अथास्यबलंद्योतयन्तिदैवंप्रणमतियस्यरावणस्यद्वाभ्यांभुजाभ्यांत्रिलोकीविजितावशीकृता

तयोरेकेन एषः हरगिरिः समुत्धृतः एकेनान्ये लोकाजिता इति द्रष्टव्यम् सोपि रावणः एनं रामं प्राप्य व्यर्थभुजः सन् येन दैवेन
विनिहतस्तस्मै देवाय नमः इति ४५ जातिरिति क्षेपकः ४६ ४७ कालस्य सर्वतो दुर्निवारत्वं द्योतयति दुर्गमित्यादि पंचभिः

सोप्येनं द्विभुजं मनुष्यमहह क्रव्याद्वीरो रिपुं प्राप्य व्यर्थभुजो रणे विनिहतो दैवाय तस्मै नमः ४५ जाति
ब्रह्मकुलाग्रजो धनपतिर्यः कुंभकर्णानुजः पुत्रः शक्रजयी स्वयं दशशिराः पूर्णा भुजा विंशतिः दैत्याः का
मचरा रथश्च विजयी पारे समुद्रं गृहं सर्वं निष्फलितं तथैव विधिना दैवे बलदुर्बले ४६ कालेन विश्वविजयी
दशकंधरो भूद्र्गाचलोद्धरणचंचलकुंडलाग्रः संस्कारसग्निदहनाय स एष कालश्चाज्ञां विना रघुपतेः
प्लवगैर्निरुद्धः ४७ दुर्गं त्रिकूटः परिखा समुद्रो रक्षांसि योधा धनदश्च वित्तम् संजीविनी यस्य सुखाग्र-
विद्या स रावणः कालवशाद्विनष्टः ४८ इह खलु विषमः पुराकृतानां भवति हि जंतुषु कर्मणां विपाकः
शिवशिरसि शिरांसि यानि रेजुः शिवशिव तानि लुठंति गृध्रपादैः ४९ ततो लक्ष्मणवायुपुत्रो विमाने जान-
कीमारोप्य सत्वरमानीतवंतौ जानकी ससंभ्रममुत्था यलज्जान्नाटयति रामः जनकतनयां तु त्वा
रागी हते दशकंधरे तदनुविरहज्वालाजालाकुलीकृतविग्रहः रघुपरिवृढो नाधो नोर्ध्वं न तिर्यगवेक्षते मु-
कुलितदृगंभोजद्वंद्वः समाहितवत्स्थितः ५०

पद्यैः ४८ इहेति शिवशिवेति कष्टं कष्टं तानि शिरांसि लुठंति चंच्वा
क्षेपेण ते स्तत श्चालयंति रेजुः विलसंति स्म आविर्भवंति ४९ जनकतनयामिति रागी युद्धोत्साहवान् रामो जनकतनयां त्वा
लंकातः स्वशिबिरे आनीय यद्वा यो जनकतनयां त्वा रागी रागवान् यतः एवं भूते दशकंधरे हते सति सर्वरूबोधम् ५०

चापेति चापालिंगनेन भंगुरं यदंगं तेन मदनमिव अन्यत्करे द्वितीयहस्ते मुष्टेर्मध्ये मध्यमुष्टिनिविष्टोयः पंचकशरः शरपंचक-
स्तं बिभ्राणं यद्वापंचकं पंचात्मकं रावणदेहं तुन्दंता शरः पंचकशरः वीरश्रीर्विज यलक्ष्मीस्तस्या नखक्षतैरिव तामिति प्रसिद्धं
५१ कालेति बीजमाश्रयभूतं अन्यथांकुरे जाते बीजवदनुपलब्धिप्रसंगः स्याद कैवल्यप्रतिभूः मोक्षजनयिता मोक्षदइ

साश्रु स्ववंश्यपरिजनलज्जया च हनूमान्मातर्जानकि चापालिंगनभंगुरांगमदनन्यस्तैकहस्तांबुजं म-
ध्ये मुष्टिनिविष्टपंचकशरं बिभ्राणमन्यत्करे वीरश्रीनखरक्षतैरिव नवैर्बाणव्रणैरंकितं वीरं राममवस्थि
तं प्रणमत प्रोन्मथ्य लंकाभटम् ५१ जानकी स्वगतं तापच्छेदसुधाकरस्तनुभृतां क्रोधानलांभोधरः
सारासारविवेकशोकभवनं हर्षस्य बीजाश्रयः कालव्यालविषस्य गारुडमणिर्धैर्यद्रुमारामभूः कैवल्यप्र-
तिभूर्घटेत सुकृतै रामस्य तत्संगमः ५२ इति रघुपतेश्चरणकमलयोः शिरो मधुकरेण मकरंदमनुभवि-
तुमिच्छति रामः उपसृत्य साशंकं हे महाताजनाः यद्यपि प्रियापतिव्रता तथापि चिरं परसंद्मस्थ्या दि-
व्यमंतरेण कथं मां स्प्रष्टुमर्हतीत्याकर्ण्य रामवाक्यादाकाशादवतरंति ब्रह्मादयः ततो दिव्योपकरणं-
नाटयति तत्र रामो रतिं लेभे न प्रियाविरहार्दितः यत्सत्यं मनसि स्वस्थे रम्याणां रमणीयता ५३

ति सुबोधम् ५२ ननु चिराभीष्टप्राप्तौ कथमस्य धैर्यमित्यत आह तत्रेति रामस्तत्र तस्यां सीतायां रतिं न लेभे तत्सत्यमेव
नन्वनिच्छुश्चेत् प्रियाविरहार्दितोपि न तु तदसौंदर्यादिति चेन्न रम्याणां वस्तूनां रमणीयता तदनुभवः स्वस्थे मनसि भवति न
तु व्यग्रे अतो रामस्य सीतादिव्यग्रहणादिनाव्यग्रत्वम् सुबोधम् ५३ ७ ७ ७

सुबोधम् ५४ सत्यमिति कमलभूः ब्रह्मा हुताशस्य जिह्वाज्वालास्तासां पंक्तय एव लीलासरः क्रीडार्थं सरसि तस्मिन् सीता
ननमेव सरसीरुहमालोक्य इयं सीता शङ्का इत्यभिदधौ अवददेव तावत् कीशेश्वरैः सुग्रीवादिभिः फूत्फूत्कारैः शब्दैर्नभोमंड
लं रभसात् त्वरया आपूरि पूरितं कीदृशस्य कालहुताशनस्य सत्यं यथार्थं शङ्काशङ्कानिर्णयं वहतः ज्ञापयतः किंभूते जिह्वालीला
सरसि अंगारे अंगारप्रचुरे अत्रैवार्थे वा शब्दैः अनुव्यवधानात् कथमडागमः अत्रोक्तं कविकामधेनौ धातवः शब्दप्रत्ययोप

जानकी सत्वरं ज्वल पावकमुपगम्य प्रोभगवन्पावक मनसि वचसि काये जागरे स्वप्नमार्गे यदि मम
पतिभावो राघवादन्यपुंसि तदिह दह ममांगं पातकं पावक त्वं सुकृतविकृतभाजां त्वं हि कर्मैकसाक्षी ५४
इति ज्वलत्तीव्रदहानान्तराले देहं निक्षेप अथ वानरभटाः सत्यं कालहुताशनस्य वहतो जिह्वातिली
लासरस्यंगारे सरसीरुहं कमलभूरालोक्य सीताननं शङ्कयं जनकात्मजेत्यभिदधौ यावन्नु कीशे
श्वरैः फूत्फूत्काररवैरपूरि रभसा तावन्नभोमंडलम् ५५ श्रीरामः सानंदम् वन्हिंगताया जनकात्मजा
याः प्रोत्फुल्लराजीवमुखं विलोक्य उवाच रामः किमहो सरादीनंगारमध्ये जलजं विभाति ५६ जान-
की सानंदम् श्रीरामो दयितां विनोदविपुलप्रीतिप्रभूतीभवत्स्वेदांबुकणावृतस्य कमलं दिव्योत्थि-
ता जानकी आगम्याशु ससंभ्रमं बहुतरां भक्तिं दधाना पुनस्तत्पादौ मणिकंकणोज्वलकरा नैव स्पृशत्यद्भुतं ५७

सर्गाः धातुसंज्ञाः स्युः धातुत्वादडागमः कीशो रूनी वानरे भिक्षावितिविश्वः सुबोधम् ५५ ५६ श्रीरामेति सीतायाः विनोदार्थं यात्री
तिस्तया बहुतरं भवत् यत्स्वेदांबुकणालंकृतं आस्यकमलं यस्य एवंभूते रामे सति स्वयमपि दिव्यादग्निशपथात् उत्थिता सस
भ्रमं सादरमपि शीघ्रमागम्य तत्रापि दृढभक्तिवती सती रामपादौ न स्पृशति अद्भुतमित्यर्थे एव प्रयोगः अस्पर्शे हेतुं द्योतयति म
णिकंकणोज्वलकरेति अहल्यावच्चरणस्पर्शमात्रेण कंकणमणयोपि योषितो मा भूवन्निति भावः ५७

अथास्याः पितृपुत्रपतितो महत्त्वं द्योतयति इयमियमिति इयमियमित्यादरे वीप्सा त्वयि निमित्तं अपरं करद्वययोजनादन्य त्किं न किमपि ५८ ५९ अत्रेति नागपाशबंधनं रावणशक्त्या अर्थान्ममेति ६० अथ हनूमदुक्तिं श्रावयन् रावणभयमा ह हंतीति हंति प्रहरतीति ज्वलितः कृशो ऽल्पतरः कपिरिति श्रुत्वा क्रीडया वनभ्रमाननं यस्य वाहिनीपतिः समुद्रः तस्मि-

स्सुग्रीवो रामं विज्ञापयति देव इयमियं त्वयि दानवनंदिनी त्रिदशनाथजितः प्रसवस्थली किमपरं दश कंधरगेहिनी त्वयि करोति करद्वययोजनम् ५८ रामो नम्राननो भूत्वा किमाज्ञापयति महाभागा मंदो दरी धन्या राम त्वया माता धन्यो राम त्वया पिता धन्यो राम त्वया वंशो परदारान्न पश्यसि ५९ साधु- रामसाधु अतः परं मम का गतिः राम ः महाभागे न खलु राक्षसीनां सहगमने धर्मः अतस्त्वया बिभी षणालयमास्थाय लंकाचले राज्यं चिराय भुज्यतामिति बिभीषणं लंकाधिपत्याभिषेचनं नाटयति ततो रामः आत्मानं पुष्पकविमाने जानकीं चारोप्य समरभूमिं दर्शयति प्रिये जानकि पश्य अत्रासीत् फणिपाशबंधनविधिः शक्त्या भवद्देवरे गाढं वक्षसि ताडिते हनूमता द्रोणाद्रिरत्राहृतः दिव्यैरिद्भिर्जि दत्र लक्ष्मणशरैर्लोकांतरं प्रापितः केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कंठाटवी ६० हंतीनिज्वलि- नः कृशः कपिरपि क्रीडावनभ्रान्ताननो लीलालंघितवाहिनीपतिरिति श्लाघाचलत्कंधरः रामस्यायमि- तीर्ष्यया कलुषितः पश्यन्प्रिये त्वत्कृते विक्रामत्यनिलात्मजे दशमुखः कां काम् अवस्थां गतः ६१ नीवाद्विनीसिं धुरिति हलायुधः सर्वस्फबोधम् ६१ हनूमदुपकृतिमुक्त्वा सुग्रीवोपकृतिं कथयन्नात्मनः कृतज्ञतामाविष्करोति निवासेनिको

तारे अतिदुर्गमे एतेनान्यजनसंगमोपिनिरस्तः तद्वियोगमनोव्यथायासः पलभुजांमांसाशिनांधुरीणः मुख्यः एतेनमनु-
ष्यभक्ष्यत्वमुक्तं सचरिपुःपुनः अकूपारंपारे समुद्रपारे वसति एतन्निपातः अत्रैतादृश्यवस्थायांकाप्रतिकृतिःप्रतीकारः प
रंतुयदिसुग्रीवोमित्रंनस्यात् तदाराघवस्यममकथाएतावतीवनस्थोरामस्तद्भार्यारावणेनहृतेति ६२ पश्येति हेप्रिये पश्य
चंद्रमाउदेति यंदृष्ट्वासर्वःप्रफुल्लति तथाकामश्चेति हरशिरोभूषणंकालरूपेण एतेनात्ररुद्रयोगादेवविंयोगिदाहकत्वमुक्तं

जानकीसविस्मयंभोप्राणनाथ तथाविधाद्वनांतात्कथमिहागतः रामःसहर्षम् प्रियेजानकि निवासः
कांतारेप्रियजनवियोगाधिरधिको धनुर्मात्रंत्राणं रिपुरपिधुरीणःपलभुजां अकूपारंपारेवसतिचस
कात्रप्रतिकृतिर्नमित्रंसुग्रीवोयदितदियतीराघवकथा ६२ अत्रांतरेचंद्रोदयोबभूव रामःदेविपश्य
पश्योदेतिवियोगिनीदिनमणिःशृंगारदीक्षामणिःप्रोदानंगभुजंगमस्तकमणिश्चंडीशचूडामणिःता
रामौक्तिकहारनायकमणिःकंदर्पसीमंतिनीकांचीमध्यमणिश्चकोरतरुणीचिंतामणिश्चंद्रमाः ६३
रामः प्राचीनस्मृतविरहव्यथातिभीतःकाकुत्स्थःकृतकुतुकाक्षिमीलनलीलः संपूर्णेशशिनिचिरा
यलग्नदृष्टेःप्रेयस्याःस्थगयतिलोचनेकराभ्याम् ६४

ताराएवमौक्तिकानि तेषांहारस्यमध्यमणिःसुरस्मरत्वं
रतिकांत्याःमध्यमणिः एतेनास्यदर्शनात् कामकेलेरत्यतिशयोद्योतितः चिंतामणित्वेनसंयोगिनीनांकेलिप्रदीपकत्वमुक्तं
६३ प्राचीनेति रामःप्रेयस्याःलोचनेकराभ्यांस्थगयति आच्छादयतिनेत्राच्छादनेहेतुमाह संपूर्णेशशिनिचिरंलग्नादृष्टिर्यस्याः
आत्मन्याच्छादनत्वहेतुमाह प्राचीनापूर्वकालीनास्मृतायामृगनिदानाविरहव्यथातयाभीतःआच्छादनेवैदग्ध्यमाह कृताकु

नुकार्थे अक्षिनिमीलनस्यलीलाक्रीडनं येन सः कनकमृगवन्मृगांकमृगमपि यानयिष्यतीतिभावः ६४ किमिति अत्रलो
करीत्यासकस्वाभावः रामगुणस्मरणात् सस्वंद्योतयन्नाह हे रघुवंश इयं लंका किंमुदे किं सुखाय नकस्मैचिदिति किमाक्षेपे अ
ल्पसुखायेयं कीदृग्लंका सर्वतः उपकुर्वाणोयः पयोधिस्तेन सेवितानि गृहोद्यानानि यस्यां सा नानोपकारगंभीरः कुर्वाणो
नापरः सुखवीतिशाश्वतः अत्रापिरत्नासनदुर्गविधायित्वनानाजनसेवनादिनोपकारता अथानिर्च्छा द्योतयति यत्रदेवेन

अत्ररात्रौ सुखवसुभाः सर्वे यथास्थानं भातरागत्स बिभीषणः रामपादौ प्रणम्यदेव किं कुर्वाणपयोधि
सेवितगृहोद्यानासुदे सर्वतोलंकेयं रघुवंशविक्रमकथाबीजप्ररोहस्थली देवेनात्र दशाननस्य दश-
भिश्छिन्नैः शिरोभिः क्रमादेकैकेन शतं शतं शतमखस्यामोदिता दृष्टयः ६५ रामस्ततस्तत्कालयोग्यो
पकरणैश्छत्रचामरादिभिर्बिभीषणं संभाव्य पुनरयोध्यां राज्यभोगाय प्रस्थितः तत्र सुग्रीवः देव वा
जिव्रातखुरप्रहारदलितक्षोणीरजोभिर्धुतः सांद्रैर्जीर्णकपोतकंठरुचिभिर्व्योमेदमास्तीर्यते किंचा
नेककरींद्रगंडविलसद्दानांबुधाराघनं संग्रामं प्रथयत्यमी परिमलप्रोद्गारिमंदानिलाः ६६ भवतारावणस्य

छिन्नैर्दशभिः शिरोभिः क्रमादेकेन शिरसा इंद्रस्य शतं शतं दृष्टयः आमोदिताः सुखिनः कृताः सहस्रनयनत्वात् अत्रेच्छा-
यामाशब्दः कोपेच्छयोरा इष्टः स्यादिति हैमी रघुवंशशब्दोत्रापि रघुवंशस्य तव ॱॱयाविक्रमकथासैवबीजं तस्योत्पादकस्थ-
लं यस्यां सा ६५ वाजीति हे राम वाजिव्राताः अश्वसमूहास्तेषां खुरप्रहारेण दलितान् चूर्णीकृता या क्षोणी तस्या रजोभिरिदं समंतात् दृ
श्यं व्योम आच्छाद्यते किंभूतैः धूम्रकपोतकंठस्येव रुचिर्येषां तैः किंचान्यदपि अमी परिमलवाहिनो मंदवायवः संग्रामं प्रथयंति

सर्वतः कथयंति परिमलपाकत्वात् किंभूतं संग्रामं अनेके ये करींद्राः गजास्तेषां गंडेभ्यः सकाशात् विगलंति च्युतानि दाना निच मदजलानि तेषां धाराभिर्घनं घनइव सवर्षं घनपंकिलं वारेणुमर्दक्षमात् एतत्कटगंधेन सर्वतो धावा परिणस्यता तात्कालिकत्वमिति भावः ६६ दृष्टइति सकौतुकं स्वयं दृष्टे रामे परं विस्मिते सति व्यावृत्तं समुद्रदर्शनान्निवर्तितं मुखमेव चंद्रो यस्याः सा मुखदर्शनलुब्धजलधिकल्लोलैराच्छादितस्य सेतोः प्रकटनाय मुखव्यावृत्तिरिति भावः ६७ रामोब्धिं दर्शयति स्नात्वेति तेसेतुशै-

ततः समुद्रे सेतुमासाद्य जानकी भोप्राणनाथार्यपुत्र दृष्टोयंसरितां पतिः प्रियतम क्वास्ते स सेतुः पुरः क्वेति क्वेति मुहुर्मुहुः सकुतुकं पृष्टे परं विस्मिते अत्रासीदयमत्र नात्र किमिति व्यग्रे निजप्रेयसि व्यावृत्तास्य सुधानिधिः समभवन्मंदस्मिता जानकी ६७ स्नात्वा पीत्वा दरीभिर्जलधिमथ चिराद्दृष्टमैनाकबंधुप्रीतिप्रौढाश्रुपूराद्द्विगुणमहिमभिर्निर्झरैः पूरयंतः ये विन्यस्ताः पुरस्तान्निशिनिशिनिवहैरौषधीनां ज्वलद्भिस्ते दृश्यंते तदंभःस्थितकपिशिबिरस्मारिणः सेतुशैलाः ६८

लाः समुद्रवेलागिरयः पुरस्ताद्दृश्यंते किंभूताः निशिनिशि ज्वलद्भिः औषधीनां निवहैः तदंभःस्थिताः समुद्रजलस्थायिनः कपीनां शिबिराः अवस्थानात्तान् स्मारयितुं शीलं येषां ते के ये विन्यस्ताः सेतुबंधनार्थं कीदृशाः दरीभिः जलधिं स्नात्वा पीत्वा निर्झराः प्रस्रवणान्पूरयंतः आपः स्रुद्धानिर्झराद्वयोरितिधरणिः कीदृशीभिर्दरीभिः चिराद्दृष्टोयः मैनाकएकबंधुस्तस्मिन्या प्रीतिस्तया प्रौढाये अश्रवस्तैर्द्विगुणो महिमाया सांताः यद्वा दरीभिर्जलधिं पूरयंत इति योज्यं पूरणे हेतुः चिराद्दृष्टेति किंभूताः सेतुशैलाः निर्झराः प्रस्रविणः ६८

यदेति अयमपांभर्त्तासमुद्रः हारावल्याः वलयस्यचलक्ष्मींवितनुतेविस्तारयति अत्रहेतुमाह दूरादापतितुंशीलंयेषां एवंभू
तानित्रिदशयुवतीनांनेत्राणितेभ्यः सकाशात्स्पष्टंलब्धुंयोग्यं अयमर्थः यदामंडलीकृतश्रेणीभूतदेवस्त्रियः केनापिकौतु
केनएनंपश्यंति तदास्त्रीपंक्तिरेवहारावली तन्नेत्रपंक्तयः वलयानितदंतःपातिमंडलानियदैतांलक्ष्मींवितनुतेतदास्यसेतु
र्महानाटकइवमहन्नृत्यमिवभवति सेतौहेतुमाह माणिक्याश्चस्फटिकाश्चकनकग्रावाणश्चतद्युक्तैःशिखरैःअशून्यात्मा
निर्मितशरीरः माणिक्यादिषुदेवस्त्रीप्रतिबिंबाक्षेपणलेननृत्यमिवदृश्यतइतिभावः महानाटकोपिईदृग्भवति महानाट-

यदादूरापातित्रिदशयुवतीनेत्रसुलभाममपांभर्त्ताहारावलिवलयलक्ष्मींवितनुते तदायंमाणिक्यस्फ
टिककनकग्रावशिखरैरशून्यात्मासेतुर्विभवतिमहानाटकइव ६९ जगामरामःसहसीतयास्वांपुरी-
मयोध्यांसहवानरेंद्रैः प्रत्यावृतैस्तैर्भरतादिभिश्चराज्येभिषिक्तोमुनिभिश्चिराय ७० हित्वैकांह
रशेखरप्रणयिनींपीयूषभानोःकलांदिक्पालावलिमौलिभूषणमणीन्गृण्हीतसर्वानपि तैःकां
चीरचिताचिरायबहुशःश्रेणीतटेजानकीगायंतीनिजमंजुसिंजितगिरामद्विक्रमाडंबरम् ७१

कः हारेणवलयेनचलक्ष्मींवितनुते बद्धांगनाबद्धबाहुप्रेक्षणंहारकोमतस्तदंतरालपंक्तिस्थविक्रियावलयंभवेदिति संगी-
तमुक्तावल्यांदूरादापातीत्यादिपूर्ववत् पुनःकिंभूतोनाटकः माणिक्यंयःस्मितैर्भावःकटाक्षैःस्फाटिकोमतः अंगहारलसं-
जातोहेमजन्माचतुर्विधइत्यपिसंगीते एतेषांग्रावाः अभिनयनानितेषांशिखरैराधिक्यैः अशून्यात्मापूर्णःग्रावोभिनयनंहा
रइतिधनंजयः पुनःकिंभूतःसेतुः नस्समाणबंधःकइव अपांभर्तेव एवमुभययथावर्णनीयंमयैवव्याख्यातं अन्यदस्पष्ट-
मत्रसन्मैः ६९ ७० ७१

रामेति यद्यद्दोर्बाहुत्वादिकं यत्तदिति यद्यपि त्रैलोक्यनाथोसि तथापि गुरोर्वालिनः वचः वैरं न त्याज्यं वैरं वाचो वचो विद्यादिति वि-
श्वः ७२ पश्येति त्वदभिमतं त्वयानुमानितं सैन्यं स भवानपि रंगावतारे अवतरतु येन त्वया तातो हतः पितृनिधनं नाशं अनु-
स्मृत्य एकेन दोष्णा सुग्रीवादिभिः सार्धं त्वां मथ्नामि ७३ श्रुत्वेति सकरुणः रामः लक्ष्मणोपि तं वालिनं निरपराधिनमाह

अंगदः अकस्माद्वानरभटेभ्यः समुत्सृत्य पितृहंतारमवलोक्य क्रोधं नाटयति दोस्तंभास्फालके-
लिमभिनीय रामचंद्र त्वयादिष्टं यद्यत्तत्तन्मयाकृतम् यतस्त्रैलोक्यनाथोसि न च त्याज्यं गुरोर्वचः ७२
पश्य श्रीरामचंद्र त्वदभिमतमहो लक्ष्मणेनापि पूर्णात्तूर्णं रंगावतारेऽवतरतु स भवानाहतो येन तातः सुग्री
वेणांजनेयप्रमुखवभटचमूचक्रवालेन सार्धं त्वामेकेनांगदोऽहं पितृनिधनमनुस्मृत्य मथ्नामि दोष्णा
७३ श्रुत्वांगदस्य महतीं समरप्रतिज्ञां तत्क्षुब्धः कपिचमूपतयः सरामाः सौमित्रिरप्यनपराधिनमा
हतं तं मत्वा कृतांजलिपुटः पुरतो बभूव ७४ आकाशे आकाशवाण्यभवद्देव स हासवालीदाशो ह-
निष्यति पुनर्मथुरावतारे श्रुत्वा विलोक्य रघुनंदन वानराणां कारुण्यमंजलिपुटं स रणान्निवृत्तः ७५
अंगदः पितृवधप्रतीकारो भविष्यतीति सानंदं कोपमपहाय शांतिमेत्य रामं स्तौति देव अकर्णम-
करोच्छेषो वाधिर्ब्रह्मांडभंगधीः गुणानाकर्ण्य रामस्य शिरःकंपभयादिव ७६ तं मत्वा पुरतोंऽगदाग्रे कृ-

तांजलिपुटो बभूव ७४ आकाशेति एनं रामं मथुरावतारे कृष्णरूपिणं वाल्येव दाशः व्याधरूपधारी कैवर्ते दाशधीवरावित्य
मरः इति वाणीं श्रुत्वा रघुनंदनस्य तथा वानराणां च कारुण्यं यथा स्यात्तथा अंजलिपुटमवलोक्य रणान्निवृत्त इति ७५ अकर्णमिति

एतेनगुणानांमनोहारित्वमुक्तं कंपोत्रसात्विकः यद्यपिशेषशिरःकंपनेनत्रैलोक्यमेवनश्यति तथापितदुपरिस्थितानांहवि
र्द्रयाभावाद्ब्रह्मांडभंगउक्तः ७६ कूर्मइति दीपिकादीपकेनात्रप्रतापवर्णनंस्तबोधमेव अंगयष्टिर्दीपकादंडः ७७ कैलासेति
हेक्षितिपतेराघव तस्यास्तवकीर्तेस्तटाकः आनंत्यमस्ति तटाकोनंततायांनातडागेपिस्वशाधमेइतिधरणिः कस्याः य
स्याः कैलासोनिलयः स्थानंतुषारशिखरीहिमवान् विंदिः उपवेशस्थानं विदिस्तंभोपवेशनावितिविश्वः हिमरुचि

हनूमान् कूर्मः पादोंगयष्टिर्भुजगपतिरसौभाजनंभूतधात्रीतैलापूराःसमुद्राःकनकगिरिरयंवृ
त्तवर्तिप्ररोहः अर्चिश्चंडांशुरोचिर्गगनमलिनिमाकज्जलंदह्यमानाशत्रुश्रेणीपतंगाज्वलतिर
घुपतेत्वत्प्रतापप्रदीपः ७७ कैलासोनिलयस्तुषारशिखरीविंदिर्गिरीशःसखास्वर्गंगागृहदीर्घिका
हिमरुचिश्चंद्रोपलोदर्पणः क्षीराब्धिर्नवपूर्तकंकिमपरंशेषस्तुशेषत्विषोयस्याःस्यादिहराघवक्षि
तिपतेकीर्तेस्तटाकस्तव ७८

श्चंद्रश्चंद्रोपल श्चंद्रकांतपाषाणश्चदर्पणोमुकुरः पूर्तकंतटाकः शेषोनंतः शेषत्विषोंगदीप्तयः शेषशब्दादन्योप्यर्थः यस्यस्या-
दितिपाठेतवकीर्तेस्तटाकःतडागःस्यात् अस्तुयस्य तडागस्यकैलासोनिलयः नितरांलीयतेयेनसजलांतस्तंभः हिमवान् वि-
दिर्बहिस्तंभः गिरिशोरुद्रः सखातदधिष्ठाता देवः गृहदीर्घिकातदंतरालकुंडः चंद्रःचंद्रोपलोपिदर्पणःतदंतर्ग्रावाणः चंद्रोप
लेतिजात्येकवचनं दर्पणेग्रावमुकुराविति धनंजयः नवपूर्तकंजलयुक्तखानितदेशः नव्यपानीयपोर्नवइतिविश्वः पूर्तकंजल-
खानितमितिहेमी शेषदीप्तयःसेतुरेनस्यनास्त्येवानंतत्वात् ७८

क्रांत्वेति हे रावण हंतः त्वत्कीर्तिरेव हंसी भूवलयं क्रांत्वा भ्रांत्वा अत्रात्मपूर्त्यभावात् ब्रह्मलोकं गता ब्रह्मलोकमिति वक्ष्यमाणा
र्थावगमाद्दृत्यते सापि तत्र यात्वा गत्वा ब्रह्मणो यो मरालो हंसस्तत्संगमवशाद्गर्भिण्यभूत् तया कीर्तिहंस्या गंगासमीपे शीतद्युते
र्मंडलं मुक्तं जनितं तदेतद्भातिकिंभूतं मंडलं कुंदवदवदातमुज्ज्वलं पुनः किंभूतं विशांकुरं विशाः कमलनालतंतवः अंकुरा नालस्था
नीया यस्य तत् नतं विशालं यद्वा विशा प्रजा नांकुर आनंदो यस्मात्तत् लोकाल्हादकमिति कुर आनंद वेदयोरिति विश्वः एते

क्रांत्वा भूवलयं दशास्य दमनत्वत्कीर्तिहंसी गता सापि ब्रह्ममरालसंगमवशात्तत्रैव गार्भिण्यभूत् याता
व्योमतरंगिणीपरिसरे कुंदावदातं तया मुक्तं भाति विशांकुरं ततमिदं शीतद्युतेर्मंडलम् ७९ राम राम म
हावीर के वयं गुणवर्णने यत्कीर्तिकामिनीभाले कस्तूरीतिलकं नभः ८० लक्ष्मीस्तिष्ठति ते गेह वाचि
भाति सरस्वती कीर्तिः किं कुपिता राम येन देशांतरं गता ८१ राम त्वद्भुजदंडडिंडिमडमत्कारप्रतापा
नलज्वालाजर्जरकीर्तिपारदघटीविस्फोटिता बिंदवः भोगींद्राः कति तारकाः कति कति क्षीराब्धयः
कत्यपि प्रालेयाचलपांचजन्यकरकाः कर्पूरकुंदेंदवः ८२ नैतद्भणितं गर्भमोचनोदकं गंगाकुंदाः जन्मकर्माणि

विशांकुरं नालश्चंद्रः पुत्र इति सर्वे कीर्तेरेवोत्पन्ना इति ध्वनिः ७९ रामेति एतेन कीर्तेरानंत्यमुक्तम् ८० लक्ष्मीरिति अयं व्यंज
कः अनेन कीर्तेर्दूरगामित्वमुक्तम् ८१ रामेति हे राम त्वद्भुजयोर्डिंडिमायाडमत्कारेण शब्देन रामो विश्वजयीति घोषणा डिंडि
मास एव डमत्कारो धामनशब्दः तद्युक्तश्चासौ प्रतापानलश्च तस्य ज्वालाभिर्जर्जरा विदलीकृता या कीर्तिरेव पारदघटी सापि वि
स्फोटिता खंडीकृता अमी तस्याः बिंदवः जाता इति शेषः के मी भोगींद्रा इत्यादयः हिमगिरयः पांचजन्यः शंखः करकः शेषना
गः शेषे पि करकः पुमानिति नामशेषे ८२

८३ खद्योतेति हे रघुपते इत्थमुक्तरीत्या तव यशो वर्णयतः मम नभ इत्यर्थे चकारः इति स्मृतेर्गोचरं स्मरणगोचरं मभूदिति इति किं यस्मिन् नभसि सविता खद्योतदीप्तिमातनोति शशी जीर्णमर्कटिकागेहप्रभामाश्रयति तारादयो मशकतामायांतितत्र न-
भः शब्देनतवयशसिश्च मरवदान्वरतेततः कारणान्नोमुद्रिताः वर्णनसामर्थ्याभावोगात् आकाशानंत्यत्वात् तद्यशसोप्यानंत्यमुक्तं
८४ कृत्वेति हे रघुपते दिश एव योषितस्तासां वृंदेन मेरुमेवोलूखलं कृत्वा स्वर्गंगैवमुसलः तेन त्वत्की र्तयः शालय इव कलमा इव

अस्युक्तौ यदि न प्रकुप्यसि मृषावादं नचेन्मन्यसे तद्वक्ष्यो द्भुतकीर्तनेन रसनाकेषां न कंडूयते रामत्वत्तरुणप्रतापदहनज्वालावलीशोषिताः सर्वे वारिधयस्ततो रिपुवधूनेत्रांबुभिः पूरिताः ८३
खद्योतद्युतिमातनोति सविता जीर्णोर्णनाभालयच्छायामाश्रयते शशी मशकतामायाति तारादयः इत्थं वर्णयतो नभस्तव यशो यातं स्मृतेर्गोचरं यत्रास्मिन् भ्रमरायते रघुपते वाचस्तु नोमुद्रिताः ८४ कृत्वा मेरुमुलूखलं रघुपते वृंदेन दिग्योषितां स्वर्गंगामुसलेन शालय इव त्वत्कीर्तयः कंडिताः तासां राशिरसौ तुषारशिखरी तारागणास्तत्कणाः प्रोद्यत्पूर्णसुधांशुबिंबमसृणज्योत्स्ना श्च तत्पांसवः ८५

कंडितानिस्तुषीकृतास्तासां कीर्तीनामसौ तुषारशिखरी हिमवान् राशिरभूत् तारागणस्तत्कणा यथा तंडुलकणा भवंति तद्वत् प्रोद्यंश्चासौ पूर्णसुधांशुश्च तस्य बिंबस्य या मसृणा निबिडा ज्योत्स्नास्ता एव तत्पांसवः धूली स्थानीयाः ८५ ५ ५

अथांगदो रामबाहुप्रशस्तिमनुवर्णयति समुद्भूताविति हे राम यद्यस्मात् समकालमेव एकदैव रावणस्य यशःप्रतापावेव पुष्पवंतौ-
सूर्याचंद्रमसौ तव तुभ्यं संप्रदाने षष्ठी समुद्भूतौ सम्यगुदितौ एकयोक्त्या पुष्पवंतौ दिवाकरनिशाकरावित्यमरः चकारात् अरेः रा
वणस्य चापो धनुरेव शेषः शिवः मदो गर्वोपि शेषोऽनंतः एतावपि समकालमेव समुद्भूतौ द्वितीयचकारात् पुनः शेषग्रहणं हर्य-
नंत शिवाः शेषा इति शाश्वतः सूर्याचंद्रमसौ रुद्रानंतौ च एकत्र स्थिताः प्रलयमेव कुर्वंति तदनिष्टशांत्यै तेभ्यश्च तुभ्यो यअनिष्ट
स्तस्य शांत्यै त्वत्खड्गमेव तीर्थं जातं त्वत्खड्गमाश्रित्य सर्वे निष्टा इति भावः प्रतापमदचापरूक्षशरीरपर्यंता एव तद्व्यतिरेकेण यश-
सः स्थितिरस्ति तदपि सीतापहरणान्नष्टम् यद्वा स्पष्टमेव यत्समकालमेव तुभ्यं रावणयशःप्रतापौ समुद्भूतौ अरिचापो मदश्च स

समुद्भूतौ यत्समकालमेव यशःप्रतापौ तव पुष्पवंतौ रामारिचापश्च मदश्च शेषस्त्वत्खड्गतीर्थं तदनि
ष्टशांत्यै ८६ किंचित्कोपकलाविलासविभवव्यावल्गमूर्ते भुजो विक्षेपादकरोन्निशाचरबलं प्रत्यर्थि-
नां यत्पुरः क्रंदत्फेरुरटत्कफेरुविरुठद्दारुस्फुटद्गुग्गुलुप्रक्रीडत्कपि निश्वसत्फणिरटद्भिल्लीभ्रमद्द्वीपि-
च ८७

सुद्भूतौ तेभ्यो यदनिष्टं तच्छांत्यै त्वत्खड्गतीर्थमेव शेषः समर्थो जातः तन्नाशेप्यवशिष्यत इति शेषः ८६ किं
चिदिति किंचित्तुच्छा यामे कोपकला तस्या विलासस्य यो विभवस्तेन व्यावल्गा विगतमावल्गनं यस्याः सा मूर्तिर्यस्य तत्संबु-
द्धौ हे तुच्छकोपविलासागाध राम तव भुजः प्रत्यर्थिनां रावणेंद्रजिदादीनां विक्षेपात् हननात् निशाचरबलं रक्षः सैन्यं यदिति प्रसि
द्धं क्रंदंतः फेरवः शिवाः यस्मिंस्तत् अकरोत् फेरुः शिवा सृगालः स्त्रीति विश्वः सप्तविशेषणैः सैन्यं विशिनष्टि रटंतः कफेरवो
यस्मिंस्तत् कंकः कफेरुर्वज्रांग इति विश्वः पुनः किंभूतम् विघटंति भज्यमानानि दारूणि येन तत् तत्पातेन वृक्षपातप्रसं

गात् स्फुरद्धूपितोगुग्गुलुः यत्रतच्छिरोग्रहणात् देवीमहोत्सवेगुग्गुलुधूपः प्रक्रीडिताः कपयोयेनतत् इदंकस्यइदंकस्ये
तिशिरश्चालनंक्रीडनं निःश्वसन्नतिभारेण फणीशेषोयेनतत् रटंत्यो आक्रोशंत्योराक्षस्योराक्षसस्त्रियोयस्यतत् भिल्ली-
रक्षःस्त्रियामपीतित्वरकः भ्रमंतो द्वीपिनोव्याघ्रायस्यतत् द्वीपीनाव्याघ्रगृध्रयोरितिहेमी ८७ रावणबलमुद्दिश्यतदि-
जयिनोरामस्यबलमुद्दिशति सैन्येति वृत्रद्रुहोमहेंद्रस्यसावाहिनी सासेनाज्ञानविकारिणोज्ञानेरामादात्मनि धनज्ञानेसति
विक्रियमाणस्यरावणस्यभुजयुगंदृष्ट्वापटं आत्मविस्तारं शैत्यं भौग्र्याभावं आनयत्प्रापयामास परत्र्वविस्तारे साकाय-

शैत्यंज्ञानविकारिणोनहिभवेद्वृत्रद्रुहोवाहिनीयैर्दृष्टारणलंपटंभुजयुगंदृष्टंपुनस्तावकम् यस्या
श्रित्यबलंस्थलीकृतसरिन्नाथःप्लवंगेश्वरैः क्रांतोभूरिभयेनयत्रशिशिरायस्यांमयूखारवेः ८८

स्यांइंद्रसेनायांरवेरपिमयूखाः शिशिराजाताःसैन्यरेणुबहुत्वाच्छादकतया घर्माभावात्शिशिरत्वम् पुनःपाश्वात्येरावणा
दिभिस्तावकंभुजयुगंदृष्टंतेषांत्वद्भुजेनभयेइतिभयंन्नभवेन्नकिंतुभवेदेव कर्मणिसप्तमी कीदृशंभुजयुगं अरणंभीतशरणंलाती
तीति अरणलंभीताभयदमिति किंभुजयुगमित्यपेक्षायांमाह प्लवंगेश्वरैः सुग्रीवादिभिः यस्यत्वद्भुजयुगस्यबलमाश्रित्यस्थ-
लीकृतश्चासौसरितांनाथश्च भूरियथास्यात्तथाक्रांतःआक्रांतःगतोवाउत्तीर्णइत्यर्थः क्रमुपादविक्षेपे इंद्रजयीरावणःत्वामा
साद्यनष्टइतिभावः८८

॰प्रस्थाप्येति भुनक्ति अभोजीत् भूतेवर्तमानता ॰९ रामइति अथोक्तानुवादपूर्वकंसीतानिष्कासनमनुवर्णयति रिपुवधात्
हेतोः निर्वासिता अयोध्यामध्यतोवाल्मीकेराश्रमंप्रस्थापिता सीता अत्रेयंकथा प्राप्तराज्येनरामेणकदाचिन्नतकेधरः



रामः प्रस्थाप्यतांवानरवीरसेनांतत्काल्योग्याभरणप्रदानैः भुनक्तिराज्यंनिजबंधु
वर्गैःसमंससीतःसहलक्ष्मणश्च ॰९ रामोदाशरथिर्दिवाकरकुलेतस्यांगनाजानकीनी
तासादशकंधरेणवनतोलंकालयंछद्मना रामेणापि कपींद्रसंगमवशादंभोनिधिंली
लयाबध्वापर्वतमालयारिपुवधादानीयनिर्वासिता ९॰ तत्रत्यक्तसीतालक्ष्मणोविल
पति वनेविमोक्तुंजनकस्यकन्यांश्रोतुंचतस्याःपरिदेवितानि क्रूरवेनलंकासमरेह-
तंमामजीव यन्मारुतिरात्तवैरः ९१

एषःमदीयंवृत्तंलोकेकीदृगितिमुहुर्मुहुः एष्टेनतेनोक्तंसर्वेशक्रमयंयशः
परंतुचिररक्षोगृहस्थासीतासंग्रहात् मलीमसत्वमिति ततो किंवदंतीभीतेनरामेन्चंद्रेणदत्ताज्ञोलक्ष्मणोवाल्मीकेराश्रमंतथादोहदत्वेन
पूर्वमेवदृष्टंतंतांत्यक्तवानिति ९॰ वनेति लंकासमरेक्रूरवेनहतंमांमारुतिर्हनूमानजीवयत् अतएवात्तवैरःकृतवैरइवेति इदानीम-
हमेवदुःखेनमरिष्यामीतिभावः ९१

दुःखंद्योतयति वनेत्यादिना सर्वेइदानींतस्यांरामवीर्यंद्योतयितुमाह पशुरपीति प्रसवकालेपशुरपिमृगः मृगींनज-
हाति तत्रानुरक्तश्च मृगेंद्रस्यसिंहस्यशब्देनचकितोपिदेहपातमंगीकृत्यमृगस्तिष्ठति भीतस्यानुरक्तेरभावात् अयंराम
स्त्यक्तवानेवतत्रविचित्सति अयंरामः अरघुः रघुवंशजन्मान तेषांनिर्दयत्वाभावात् इयमप्यजानकीजनकजान त

पशुरपिनमृगोमृगींमृगेंद्रध्वनिचकितः प्रसवक्षणेजहाति अयमरघुरजानकीयमावांयदि
नसजीवतिनिर्दयोह्यवेधाः ९२ यद्भुग्नंधनुरीश्वरस्यसमरेयज्जामदग्न्योजितस्त्यक्तायेननगुरोर्गि-
रावसुमतीसेतुः पयोधौकृतः एकैकंदशकंधरक्षयकृतोरामस्यकिंवर्ण्यतेदैवंवर्णययेनसोपि
सहसानीतःकथाशेषताम् ९३

स्यांतद्विरहेणप्राणधारणत्वायोगात् आवांरामलक्ष्मणयोः मध्येयदिसरामः
एवतस्याः विरहेनजीवतितर्हिविधानिर्दयोस्तिसीतानिर्वासनात् रामलोकांतरप्रापकत्वाच्च ९२ रामंवर्णयदैवेदुर्लंघ्यत्वमाह
यदीति येनतस्यरामस्यैकैकम साधारणंवृत्तंकिंवर्ण्यते कर्मानंतत्वनियमात् अतोदैवमेववर्णय येनसोप्येतादृक्बलोपि
रामः सहसैवकथाशेषतांप्रापितः रामोवतीर्यरावणंहत्वावैकुंठंगतइतिकथैवावशिष्टा एतेनकृतराज्यस्यरामस्यवैकुंठगमन
मुक्तं ९३

ह॰ना॰
९२

अथैनं महानाटकमुपसंहरन् श्रवणफलमाह रम्यमिति कांडाः बाणाः तेषां शौंडेन प्रावीण्येन व्याप्तं धनुर्वेदवैदग्ध्यं सदिति ब्रह्मां
डएव भांडं पात्रं तत्र पुण्ये रणशिरसि पारवाब्धिं रणमार्गागाधं सुबोधं १४ चतुर्दशभिरिति महानाटककर्ता चतुर्दशसं
ख्याकानि भुवनानि प्रति ब्रह्ममोक्षं धत्ते प्रापयति एकैकांकवर्णनादेकैकलोकस्य मोक्षः स्यात् किंपुनः सर्वस्य श्रवणस्येति

अं॰
१४

रम्यंश्रीरामचंद्रप्रबलभुजबृहत्तांडवंकांडशौंडव्याप्तंब्रह्मांडभांडेरणशिरसिमहानाटकंपारवाब्धिम्
पुण्यंभक्त्याजनेभ्यःप्रविरचितमिदंयःशृणोतिप्रसंगान्मुक्तोऽसौसर्वपापादरिभटविजयीरामवत्संगरेषु १४
चतुर्दशभिरेवांकैर्भुवनानिचतुर्दश श्रीमहानाटकंधत्तेकेवलंब्रह्मनिर्मलम् १५ रचितमनिलपुत्रेणाथ
वाल्मीकिनाब्धौनिहितममृतबुद्ध्याप्राङ्महानाटकंयत् सुमतिनृपतिभोजेनोद्धृतंतत्क्रमेणग्रथित-
मवतुविश्वंमिश्रदामोदरेण १६

भावः किंभूतं ब्रह्मकेवलमित्युक्तं अतएवनिर्मलमविद्याशून्यं १५ रचितमिति ह
नूमतः प्राक्कालकर्तृत्वमेतस्याद्यतनीयत्वाभावात् तत्कथयन्नयमवतारयति अमृतबुध्येति वाल्मीकिनाक्रमेण कथनाद्यानुक्र
मेण भोजनोद्धृतं अत्रेयंकथा पूर्वमेतेन हनुमतानखरटंकैर्गिरिशिलासु विलिखितं तत्तुवाल्मीकिनादृष्टं तदेतस्यातिमधुरत्वमा
कर्ण्यरामायणप्रचाराभावशंकयाहनूमान्प्रार्थितः त्वमेतत्समुद्रेनिधेहीति तथेति तेनाब्धौप्रापितं तदवतारेणभोजेनसुमति
नाजलज्ञानैरुद्धृतमिति १६

९

माथुरकुलसंभूतः शुद्धचतुर्वेदबोधविख्यातः हेमोरसोविजयतेकमलापतिरीश्वरप्रेमा १ तत्पुत्रेणमयेयंमोहननाम्ना
र्थरत्नानाम् मंजूषाकपिविहिताप्यभिधानबलेनसंविवृता २ एतद्ग्रंथार्थोक्तिश्रमैकविज्ञःपतिःश्रियारामःतुष्यान्निजपद



इतिश्रीमन्महानाटकेश्रीमद्धनूमद्विरचितेश्रीरा
मविजयोनामचतुर्दशोऽंकःसमाप्तः १४॥ ❀ ॥

भक्तिंदिशतुदयावानुरुकरःस्वल्पम् ३ इतिश्रीमिश्रमोहनदासविरचितायांश्रीहनूमन्नाटकदीपिकायांरामविजयो
नामचतुर्दशोऽंकः १४ ❀ ❀ शके १७ ८६ रक्ताक्षीनामसंवत्सरेश्रावणमासेशुक्लपक्षेपंचम्यांरवौएतद्दिने
इदंपुस्तकंमुंबय्यांकृष्णाशास्त्रीगुर्जरयाणींआपल्याशिलाछापरवान्यांत छापिलेंअसे स्वार्थपरोपकारार्थंच ॥ ❀ ॥

